

# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**



Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

HEALTHY CHILD—NATION'S HOPE & PRIDE

Design courtesy : World Health Organisation

Contributors

कविहृदयम्–

# पूर्वजानां परिश्रमस्य फलम्

ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं
धीः पश्यति श्रान्तिमवेदयन्ती।
फलं तदाद्यैः परिकल्पितानां
विवेकसोपानपरम्पराणाम्।। – अभिनवगुप्तः



अभिनवगुप्तः अलङ्कारशास्त्रस्य मूर्धन्यः आचार्यः। प्राचीनैः प्रतिपादितेषु विषयेषु ये दुर्बलाः अंशाः आसन् तान् परिहृत्य प्रबलाः युक्तीः समायोज्य रसतत्त्वं दृढतरं प्रतिपादितवान् सः। तीक्ष्णमतिः सः विद्यानुगुणेन विनयेन एवं वदति– "बुद्धिः सोपानक्रमेण उत्तरोत्तरम् उत्कृष्टान् बहून् अंशान् पश्यति। एवं कुर्वती सा अल्पाम् अपि श्रान्तिं न अनुभवति। कथम् एतत् शक्यम्? इति चेत्– प्राचीनैः प्राज्ञैः स्वविवेकबलात् यः चिन्तनमार्गः सुस्पष्टः परिकल्पितः तस्य फलम् एव एतत्। अतः पूर्वजानां पविश्रमस्य फलं वयम् अनुभवामः" इति।

अभिनवगुप्तेन यद्यपि विनयप्रदर्शनार्थम् एवम् उक्तं, तथापि वस्तुतः विचार्यमाणे श्लोके उक्तः अभिप्रायः वास्तविकः इत्यंशः स्फुटीभवति एव। शास्त्रक्षेत्रे, विज्ञानक्षेत्रे, संशोधनक्षेत्रे, इतरत्र वा नूतनाः आविष्काराः बहुभिः कृताः दृश्यन्ते। नूतना प्रगतिः साधिता दृश्यते। अत्र सर्वत्र एतादृशकार्यं कुर्वतः प्रयत्नस्य प्रतिभायाः च प्राधान्यं स्यात् नाम। किन्तु तत्तक्षेत्रे परिश्रमं कृतवतां पूर्वजानां परिश्रमस्य अपि महत्त्वम् अत्यधिकम् अस्ति एव। अस्माकं व्यवहारे, तत्त्वचिन्तने, संस्कृतिक्षेत्रे, सामाजिकक्षेत्रे, किं बहुना, सर्वेषु क्षेत्रेषु पूर्वजानां चिन्तनस्य फलस्य, पात्रम् अस्ति एव। यदि पूर्वजानाम् अनुभवः, चिन्तनं, परिश्रमः च अस्मत्समीपे सञ्चितः न स्यात् तर्हि वयम् इतोऽपि प्रायः अटविकाः आदिवासिनः इव स्याम।

फलं केनचित् एकेन एव प्राप्यते चेदपि कार्ये सहकारिणः तु बहवः भवन्ति एव। सर्वेषां परिश्रमस्य परिणामतः तत् प्राप्तम्। एवं स्थिते, 'मम परिश्रमस्य फलम् एतत्' इति यदि फलस्वीकर्ता चिन्तयेत् तर्हि तत् अनुचितं स्यात् खलु?

मित्राणि! फलप्राप्तिमात्रं मनसि निधाय वयम् अपि बहुवारं चिन्तितवन्तः स्याम खलु– 'मम परिश्रमेण एव प्राप्तम्' इति। 'पूर्वजानां सहकारिणां च भागः अत्र मङ्गन्' इति न स्मृतवन्तः स्याम खलु? किम् एतादृशम् अनौचित्यं शोभते?

# सर्वाणि वस्तूनि अन्तः स्थापितानि वा?

| | |
|---|---|
| माता– वत्से! सर्वाणि वस्तूनि आगतानि वा इति पश्यतु। | Dear, take a look and see if all the items are there or not? |
| पुत्री – आम् अम्ब! सर्वाणि आगतानि। | Mother, all the items have come. |
| मा –श्वेतस्यूतः कुत्र? | Where is that white bag? |
| पु – अत्र मम पार्श्वे अस्ति। | It's here, by my side. |
| मा –यानस्यूतः? | What about the airbag? |
| पु – भवत्याः आसनस्य अधः स्थापितः। | It's kept under your seat. |
| मा –प्लास्टिक्स्यूतः भवत्याः पार्श्वे अस्ति वा? | The plastic bag is there? |
| पु – आम्। सर्वे स्यूताः मया अन्तः स्थापिताः। निश्चिन्ता भवतु भवती। | Yes, it is. I have brought all the bags in. You don't have to worry. |
| मा –प्लास्टिक्स्यूते खाद्यवस्तूनि सन्ति खलु? ततः किमपि पतेत् इति भीत्या पृष्टं मया। | Food items are there in that plastic bag. Some of it may fall down. So I wanted to know. |
| पु – वस्तुपतनभीतिः नास्ति। स च स्यूतः मम पादस्य पार्श्वे एव अस्ति। | Don't be worried about that. That bag is by the side of my leg. |
| मा –फलानि आनेतुं गतः भवत्याः पिता इतोऽपि नागतः खलु? | Your father went to get some fruits, but he hasn't yet come! |
| पु – यानप्रस्थानार्थम् इतोऽपि दश निमेषाः सन्ति खलु? तदभ्यन्तरे आगच्छेत् सः। हाँ, पश्यतु तत्र। आगच्छन् अस्ति सः। | Still there are ten more minutes for the bus to leave. He will be here in time. See, he is coming! |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजगरः - | Python | निम्बवृक्षः - | Neem tree |
| अनिर्देश्यम् - | Indescribable | निर्लज्जम् - | Shamelessly |
| अवलेहः - | Pickle | नीरसता - | Dullness |
| आकस्मिकः - | Sudden | पटगृहम् - | Tent |
| आविष्टः - | Possessed | पयोहिमम् - | Ice cream |
| आहरति - | Plucks and brings | पशुचारणम् - | Tending of cattle |
| आशंसति - | Desires | पितृव्यः - | Father's brother |
| उषसि - | In the early morning | प्रशिक्षणम् - | Training |
| कण्टकम् - | Thorn | प्रसक्तिः - | Perseverance |
| कलहायमानः - | Quarrelling | भ्रातृजाया - | Elder brother's wife |
| कासते - | Coughs | मण्डूकः - | Frog |
| कूर्मः - | Tortoise | यमलौ - | Twins |
| क्षुवः - | Sneeze | वाचाटः - | Talkative |
| क्षौति - | Sneezes | व्याघरणम् - | Seasoning |
| गोष्ठम् - | Cow-shed | शुण्डा - | Elephant's trunk |
| घ्राणशक्तिः - | Power of smell | शुनकः - | Dog |
| तन्तुवायः - | Weaver | श्वासकोषः - | Lungs |
| दध्योदनम् - | Curd-rice | समर्थयति - | Defends |
| दयनीया - | Pitiable | सम्भ्रान्तः - | Agitated |
| द्रोणी - | Bucket | हस्तिपकः - | Mahout |



# चन्दमामा

एप्रिल्-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'




## 'शान्तिशतकस्य नान्दीगीतं गायेम

जनवरीमासस्य तृतीयः दिनाङ्कः कश्चन ऐतिहासिकमहत्त्वयुक्तः दिवसः। तस्मिन् दिने अमेरिकारशियादेशौ अण्वस्त्रन्यूनीकरणसन्धिं हस्ताक्षरैः प्रमाणीकृतवन्तौ। देशप्रतिनिधित्वेन जार्ज् बुष् येल्स्तिन् च एतस्मिन् योजनान्विताण्वस्त्रन्यूनीकरणसन्धिप्रस्तावे (START-II) हस्ताक्षरं कृतवन्तौ। सद्यःकाले जार्ज् बुष् रशियादेशं यदा गतवान् तदा एषा घटना घटिता।

सन्धिविषयः सर्वासु पत्रिकासु मुखपुटे एव विशेषप्राधान्येन प्रकटितः अभवत्। किन्तु एतत्सम्बन्धिनी अन्या काचित् लघुवार्ता कस्मिंश्चित् पुटे कुत्रापि कोणे अनाकर्षकरूपेण प्रकाशिता स्यात्।

जनवरीमासस्य तृतीये दिनाङ्के प्रातः कस्यचित् अनाथालयस्य नूतनवर्षारम्भम् आचरद्भिः बालैः मिलितवन्तौ उभयदेशाध्यक्षौ, तयोः पत्न्यौ च। एतान् परिचाययन् समारम्भस्य प्रमुखः उक्तवान्– ''भोः प्रियबालाः, अद्य अपूर्वः सन्धिः हस्ताक्षरैः प्रमाणीक्रियते। एतत् कार्यं सर्वेषां जीवनं निरातङ्कं विधास्यति'' इति। ततः सः सन्धेः पूर्णविवरणं तत्र निरूपितवान् अपि।

यदि तस्यां सभायां प्रश्नं प्रष्टुम् अवकाशः स्यात् तर्हि केचन वा बालाः तौ देशाध्यक्षौ अप्रक्ष्यन् यत् सन्धौ यथा सूचितं तथा दशानां वर्षाणाम् अनन्तरम् अपि कुतो वा कानिचन अण्वस्त्राणि अवशेष्यन्ते, कुतो वा तानि अपि न नाश्यन्ते इति।

'निश्शस्त्रीकरणस्वप्नं पश्यतः जगतः हितकरः आशादायकः सन्धिः एषः' इति अमेरिकाध्यक्षेण उक्तम्। रशियाध्यक्षेण उपवर्णितं यत् जागतिकसुरक्षायाः अपूर्वः सन्दर्भः एषः इति।



भाविजनता एतस्मात् प्रबलराष्ट्रद्वयात् न केवलं जागतिकसुरक्षताम्, अपि तु सम्पूर्णनिश्शस्त्रीकरणं शाश्वतविश्वशान्तिं चापि निरीक्षते। आगामिषु दशसु वर्षेषु 'युद्धोन्मुखानि' राष्ट्राणि 'रक्षणोन्मुखानि' भवन्तु इति वयम् आशास्महे। 'वस्तुतः तु 'युद्धानि' मानवमनस्सु प्रथमं पदम् अर्पयन्ति। अतः युद्धपदम् एव कुतो वा मनस्तः न अपनेतव्यः?



आगामिनि दशके वयं सर्वेऽपि शान्तिशतकस्य नान्दीगीतं गायेम। एषा अपेक्षा अपेक्षानर्हा तु न खलु?

सम्पुटः–१० एप्रिल्–१९९३ सञ्चिका–१

प्रतिकृतिमूल्यं रू. ४-०० वार्षिकं ग्राहकशुल्कं रू ४८-००



# नामनिर्वचनम् - ४

[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]

**विश्वामित्रः** – विश्वम् एव मित्रम् अस्य(+दीर्घः)। यस्य विश्वम् एव मित्रम् अस्ति सः विश्वामित्रः। आपाततः दर्शनात् तु भासते यत् विश्वामित्रः इत्यत्र वकारोत्तरम् आकारस्य दर्शनात् विश्वम् अमित्रं यस्य सः इति विग्रहवाक्यं स्यात् वा इति। किन्तु ऋषौ वाच्ये 'मित्रे चर्षौ'(६.३.१३०) इति सूत्रेण दीर्घः। विश्वामित्रः इति रूपम्। तस्यैव ऋषेः नाम्नः अनुकरणं क्रियते इत्यतः लोके अपि विश्वामित्रः इति रूपं व्यवहारे युक्तम्।

**गोविन्दः** - [गो+विद्लृ(लाभे)+शः] गां भुवं धेनुं स्वर्गं वेदं वा अविदत् (विन्दति=प्राप्नोति) इति गोविन्दः। विष्णोः एव अपरं नाम गोविन्दः इति। पुराणादिषु निरूपिताः विभिन्नाः कथाः आधारीकृत्य गोविन्दपदस्य विभिन्नाः अर्थाः उक्ताः। विष्णुः वराहरूपेण गां भूमिम् उद्धृतवान्। अतः सः गोविन्दः। कामधेनुरूपम् ऐश्वर्यं सः प्राप्तवान् इत्यतः अपि सः गोविन्दः। इन्द्रतः सः स्वर्गं प्राप्तवान् इत्यतः अपि गोविन्दः। मत्स्यावतारसमये एषः वेदादीन् उद्धृतवान् इत्यतः अपि गोविन्दः। 'गो'पदस्य विभिन्नाः अर्थाः सन्ति इत्यतः गोविन्दपदस्य अपि अर्थवैविध्यं सिद्धम्। पूर्वोक्ताः अर्थाः सर्वे विष्णुवाचिनः एव। गोश्रेष्ठे बृहस्पतौ चापि एषः शब्दः रूढः दृश्यते।

**शङ्करः** – [i) शं+(डु) कृञ् (करणे) 'अच्'। ii) शम्+कृञ् 'टः' इति वा।] शं कल्याणं सुखं वा करोति इति शङ्करः। यः मङ्गलं करोति सः शङ्करः। परशिवे परमेश्वरे रूढः एषः शब्दः। 'ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः' इति अमरकोषः।

---

**सूचना** – *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

# नूतनः अमेरिकाध्यक्षः

BILL CLINTON



आर्कान्सराज्यस्य भूतपूर्वः शासकः, ४६वर्षीयः बिल् क्लिण्टन् अमेरिकादेशस्य द्विचत्वारिंशत्तमाध्यक्षत्वेन तद्देशीयैः निर्वाचितः अस्ति।

गते नवेम्बर्मासे तृतीये दिनाङ्के अध्यक्षपदार्थं तत्र निर्वाचनं प्रवृत्तम्। तत्र जार्ज् बुश्, क्लिण्टन् च अभ्यर्थिनौ आस्ताम्। क्लिण्टन्वर्येण जयः प्राप्तः। एतस्मिन् निर्वाचने १० कोटिजनाः (५५%) मतदानं कृतवन्तः। तत्र बिल्क्लिण्टन् ४४% मतानि, जार्ज् बुश् ३९% मतानि च प्राप्तवन्तौ। तृतीयः स्वतन्त्रः अभ्यर्थी रास् पेरोट् १७% मतानि प्राप्तवान्। दीर्घकालानन्तरं डेमाक्रटिक्पक्षः क्लिण्टन्नेतृत्वे पुनरपि श्वेतभवने यु.एस्. कांग्रेस् इत्यत्र च आधिक्यं प्राप्नोत्।

अमेरिकादेशस्य इतिहासस्य दर्शनात् ज्ञायते यत् डेमाक्रटिक्पक्षः प्रतिषोडशवर्षावध्यनन्तरम् एकवारम् अधिकारं प्राप्नुवन् अस्ति इति। १९६० तमे वर्षे जान्.एफ्. केनडी, १९७६ तमे वर्षे जिम्मी कार्टर् च जयं प्राप्य शासनं कृतवन्तौ। षोडशवर्षाणाम् अनन्तरम् इदानीं पुनरपि डेमाक्रटिक्पक्षेण एव विजयः प्राप्तः अस्ति।

जनवरीमासे २० तमे दिनाङ्के अध्यक्षपदम् अलङ्कुर्वन् क्लिण्टन् जनान् सम्बोधयन् उक्तवान् यत् निर्वाचनसमये यानि आश्वासनानि दत्तानि तानि अवश्यं साध्यन्ते एव इति। 'विषमायाम् आर्थिकस्थितौ प्रगतिः आनीयते। एतदर्थम् आर्थिकनीतौ अपेक्षितानि परिवर्तनानि क्रियन्ते च' इति सः उक्तवान्। 'आकस्मिकी अद्भुतघटना काचित् प्रवर्तेत इति निरीक्षा न करणीया' इति जनान् निवेद्य सः उक्तवान् यत् २५ कोटिमितायाः जनतायाः हितार्थम् आरोग्य-सुरक्षा-विद्यादिव्यवस्थाः उत्तमाः क्रियन्ते इति, अल्पयत्नेन एव प्रत्यर्पणयोग्यम् ऋणं विद्यार्थिभ्यः दीयते इति, परिसरकालुष्यस्य निवारणार्थं विशेषप्रयत्नः क्रियते इति च।

अमेरिकादेशीयानां जीवनविधाने परिवर्तनम् आनेतव्यम् इति क्लिण्टन् प्रचारं कृतवान्। एतदेव तस्य विजयस्य कारणं जातम्। क्लिण्टन् वदति– "अस्माकं देशे विभिन्नजातयः विभिन्नभाषाः च सन्ति। एषा विभिन्नता देशस्य प्रपञ्चस्य च बलवर्धिका स्यात्, न कदापि हानिकारिका" इति। पूर्वं कदाचित् सः एवम् उक्तवान् आसीत्– "अस्मद्देशीयाः आस्त्रीपुरुषम् आबालवृद्धं सर्वे दैवदत्तस्य शक्तिसामर्थ्यस्य पूर्णोपयोगेन सुखं शान्तिं च प्राप्नुयुः। देशे

दृश्यमानाः जातिभाषादिभिन्नताः देशस्य एकताशक्तेः वर्धिकाः स्युः''' इति।

क्लिण्टन्वर्यस्य जन्मतः मासद्वयात् पूर्वम् एव तदीयः पिता विलियं जेफर्सन् ब्लेत् वाहनापघातेन दिवं गतः आसीत्। ततः एतस्य माता रोजर् क्लिण्टन्नामकं परिणीतवती। बिल् क्लिण्टन् विद्यार्थिवेतनसाहाय्येन अध्ययनं कृतवान्। वाषिंग्टन्-नगरस्थे जार्ज्टौन्विश्वविद्यालये अधीत्य सः स्नातकपदवीं प्राप्तवान्। ततः 'रोड्स् विद्यार्थिवेतनं' प्राप्य आक्स्फर्डविश्वविद्यालयं प्रविश्य तत्त्वशास्त्रं राजनीतिशास्त्रं च सः अधीतवान्। अनन्तरं येल्सविश्वविद्यालये न्यायशास्त्राध्ययनं कृतवान् सः।

AL GORE



यु.एस्. कांग्रेस् निमित्तं प्रवृत्तायां स्पर्धायां प्रथमवारं क्लिण्टन् पराजयं प्राप्तवान्। द्वितीये प्रयत्ने सः जयं प्राप्य आर्कान्सास्प्रदेशस्य अटार्नीजनरल् रूपेण चितः अभवत्। ततः प्रवृत्ते निर्वाचने सः पुनः पराजितः। वर्षद्वयानन्तरं सः पुनरपि जयं प्राप्नोत्।

यदा क्लिण्टन् निर्वाचने भागं वहति स्म तदा जनाः तम् उद्दिश्य अभिमानेन वदन्ति स्म– 'तरुण! विजयी भवतु भवान्' इति। क्लिण्टन्वर्यस्य वैशिष्ट्यं यत् एषः द्वितीयजागतिकयुद्धस्य अनन्तरं जन्म प्राप्तवान् सन् अमेरिकाध्यक्षपदं प्राप्तवान् अस्ति। येषां वयः ५० वर्षेभ्यः न्यूनम् अस्ति तादृशेषु अध्यक्षेषु एषः षष्ठः। किन्तु अध्यक्षपदम् अलङ्कृतवत्सु न्यूनवयस्कः तु थियोडोर् रूस्वेल्ट्, यश्च ४२ तमे वयसि एव सर्वोच्चम् एतत् पदं (१९०१ तमे वर्षे) अलङ्कृतवान् आसीत्।

क्लिण्टन्वर्यस्य पत्नी हिलरी क्लिण्टन् सुप्रसिद्धा न्यायवादिनी। बालानाम् अधिकारस्य निमित्तं सा बहुधा कार्यं करोति। क्लिण्टन्दम्पत्योः एकमात्रपुत्रः द्वादशवर्षीयः चेल्सी, कस्मिंश्चित् सार्वजनिकविद्यालये पठन् अस्ति।

यदा क्लिण्टन् अध्यक्षत्वेन निर्वाचितः तदा एव श्री अल् गोर् उपाध्यक्षरूपेण चितः। एषः परिसरविशेषज्ञः।

बिल् क्लिण्टन्वर्यस्य केचन विशेषाः–

* क्रीडासु विशेषरुचिः। तत्रापि गोल्फ्क्रीडायाम् अत्यासक्तिः।
* चलनचित्रेषु (तत्रापि 'स्पै स्थ्रिलर्'चित्रेषु) अपि विशेषासक्तिः।
* पयोहिमम्, आम्रफलैः निर्मितः अवलेहः च विशेषतः रोचते।
* शीतलयुद्धस्य परिणामानां विषये जनेषु जागरणम् उत्पाद्य जनहितं साधनीयम् इति प्रबलेच्छा।




# उभौ वैद्यौ

अनङ्गपालः नाम राजा पूर्वं अवन्तीनामकं राज्यं पालयन् आसीत्। तस्य गजशालायां शर्वाणी नाम गजा आसीत्। तस्यां राज्ञः विशेषप्रीतिः आसीत्। यतः बहुषु युद्धेषु ताम् आरुह्य युद्धं कुर्वन् राजा जयं प्राप्तवान् आसीत्।

कदाचित् राजा अनङ्गपालः शर्वाणीम् आरुह्य विहारार्थं नगरसीमासमीपस्थम् उद्यानं गतवान् आसीत्। किन्तु दौर्भाग्यकारणात् उद्यानप्राप्तितः पूर्वम् एव शर्वाणी शक्तिहीना सती मध्येमार्गं शयनं कृतवती।

इतः पूर्वं कदापि एवं न प्रवृत्तम् आसीत्। अतः राजा एतया घटनया नितराम् आश्चर्यचकितः। शर्वाणी कदापि अविधेयतया न व्यवहृतवती आसीत्। तस्याः आरोग्यम् अपि बहुसम्यक् एव आसीत्। 'एवं तर्हि शर्वाणी किमर्थम् एवं कृतवती?' इति क्षणकालं चिन्तनं कृतवान् राजा।

अनन्तरं सः झटिति गजातः अवतीर्य हस्तिपकम् आज्ञापितवान् यत् गजायाः किं जातम् इति परिशीलयतु इति। हस्तिपकः परीक्षितवान्। किन्तु तेन किमपि न ज्ञातम्। राजा गजचिकित्सायां सुनिपुणं राजवैद्यं शिवशर्माणम् आनायितवान्।

शिवशर्मा गजां सम्यक् परीक्ष्य राजानम् उक्तवान्– "प्रभो, सर्वाङ्गसङ्कोचिनी-नामकेन वातरोगेण पीडिता अस्ति एषा। एषः रोगः विरलतया एव दृश्यते। किन्तु एतेन रोगेण ग्रस्ता गजा कष्टेन एव स्वास्थ्यं प्राप्नुयात्। एतस्य चिकित्सा प्राचीनग्रन्थेषु निरूपिता अस्ति। किन्तु चिकित्सा तु महाव्ययकारिणी" इति।

"गजा यथापूर्वं स्वस्था भवेत् इति तु मम

अपेक्षा। व्ययविषये भवतः चिन्ता मास्तु। चिकित्सायाः आरम्भः तु भवतु" इति उक्तवान् राजा।

शिवशर्मणः वासार्थं तत्रैव किञ्चन पटगृहं निर्मितम्। तत्र निवसन् शिवशर्मा चिकित्साम् आरब्धवान्। विविधानि मूलानि पुष्पाणि च तेन आनायितानि। कानिचन सः स्वयम् अन्विष्य आनीतवान्। तैः विविधानि औषधानि लेप्यानि च कुर्वन् शिवशर्मा गजायाः चिकित्सां कृतवान्।

एकः मासः अतीतः। तथापि शर्वाण्याः आरोग्ये प्रगतिः तु न दृष्टा। अतः राजा एतद्विषये असन्तुष्टः अभवत्। तदा वैद्यः शिवशर्मा उक्तवान्– "प्रभो, शर्वाण्याः आरोग्ये प्रगतिः बाह्यरूपेण काऽपि न दृश्येत, किन्तु प्रगतिः महता प्रमाणेन जाता इत्यत्र तु सन्देहः एव मास्तु भवतः। चिकित्सायाः योग्यः परिणामः जातः इति वैद्यः अहं ज्ञातुं शक्नोमि। केषुचित् एव दिनेषु शर्वाणी यथापूर्वं स्वस्था भविष्यति इत्यत्र विश्वासः अस्ति मम" इति।

एतत् श्रुत्वा राजा कोपेन किमपि वक्तुम् उद्युक्तः। तावता तत्र उपस्थितेषु कश्चित् अग्रे आगत्य राजानम् उक्तवान्– "प्रभो, एतावता प्रवृत्तायाः चिकित्सायाः फलतः कोऽपि परिणामः न दृष्टः इति तु भवान् जानाति एव। एषा शर्वाणी अचिरात् एव स्वस्था यथा भविष्यति तथा अहं करिष्यामि। तदर्थम् अवकाशं ददातु कृपया" इति।

राजा तम् आश्चर्येण दृष्टवान्। तदा सः



युवकः राजानं नमस्कृत्य उक्तवान्– "प्रभो, मम नाम जीवदत्तः इति। वृत्त्या वैद्यः अहम्" इति।

तदा शिवशर्मा उक्तवान्– "प्रभो, एषः मम शिष्यत्वेन कानिचन दिनानि मत्समीपे आसीत्। तत्काले एतेन यद्यपि वैद्यकीयं किञ्चित् अधीतं, तथापि वैद्ययोग्याः गुणाः एतस्मिन् न सन्ति इत्यतः एतम् अहं गृहात् प्रेषितवान्" इति।

राजा अनङ्गपालः क्षणकालं विचिन्त्य उक्तवान्– "कस्य कीदृशं सामर्थ्यम् इति कोऽपि ज्ञातुं न शक्नोति। अतः चिकित्सार्थम् एतस्मै अनुज्ञां दत्तवान् अस्मि" इति।

तदा जीवदत्तः उक्तवान्– "प्रभोः, शर्वाण्याः अनतिदूरे एकः तडागः निर्मातव्यः। तडागे कमलपत्राणि नालाः च प्रभूतं भवेयुः। तडागं परितः सुन्दर्यः पुष्पलताः अपि आरोपणीयाः" इति।

एतत् श्रुत्वा राजा आश्चर्यम् अनुभवन् पृष्टवान्– "कीदृशी एषा चिकित्सा भवतः?" इति।

"प्रभो, मया यथा उक्तं तथा कारयतु कृपया। अचिरात् एव तस्य परिणामं भवान् स्वयं ज्ञास्यति" इति उक्तवान् जीवदत्तः।

राज्ञः सन्देहस्य निवृत्तिः तु न जाता। तथापि सः जीवदत्तेन यथा उक्तं तथा कारितवान्। सप्ताहाभ्यन्तरे सुन्दरः तडागः सिद्धः। ततः जीवदत्तस्य सूचनानुसारं प्रतिदिनं हस्तिपकैः स्नानार्थं गजशालातः गजाः आनीताः।





ततः दशदिनाभ्यन्तरे शर्वाण्यां परिवर्तनं दृष्टम्। जीवदत्तः राजानं तडागसमीपं नीत्वा शर्वाणीं प्रदर्शितवान्। तत्समये शर्वाणी अन्यैः गजैः सह स्नान्ती घीङ्कुर्वती अन्यस्य गजस्य उपरि शुण्डया गृहीतं जलं पातयन्ती च आसीत्।

एतत् दृष्ट्वा राजा नितरां सन्तुष्टः। सः जीवदत्तम् उक्तवान्– "भवता अपूर्वा चिकित्सा कृता। अहं नितरां सन्तुष्टः अस्मि। श्वः पूर्णायां सभायां भवतः सम्माननं करिष्यामि" इति।

शिवशर्मा समीपे एव आसीत्। सः राजानम् उक्तवान्– "प्रभो, महता श्रमेण बुद्धिमत्तया च औषधं निर्माय गजां स्वस्थां कृतवान् अहम्। मया यत् औषधं दत्तं तस्य परिणामतः एव सामर्थ्यं प्राप्तं शर्वाण्या। अतः एव सा अन्यैः गजैः सह जलक्रीडादिषु मग्ना। जीवदत्तेन तु किमपि न कृतम् एव। एवं स्थिते ऋते मत्तः, जीवदत्तस्य सम्माननं किम् उचितम्?" इति।

किन्तु जीवदत्तः एतत् न अङ्गीकृतवान्। सः राजानम् उक्तवान्– "मया यः चिकित्साक्रमः आश्रितः तस्य परिणामः प्रत्यक्षं दृश्यते। एवं स्थिते कथं वा अहं सम्माननार्हः न भवेयम्?" इति।

अनङ्गपालः किम् उचितम् इति निर्णेतुं न शक्तवान्। "श्वः प्रातः भवन्तौ राजास्थानम् आगच्छताम्। तत्र योग्यः निर्णयः क्रियते" इति उक्तवान् सः।

अनन्तरदिने राजसभा प्रवृत्ता। राजा उभयोः अपि वैद्ययोः कथनं वस्तुस्थितिं चापि निवेद्य सभासदः पृष्टवान् यत् कस्य वैद्यस्य चिकित्सायाः कारणतः शर्वाणी स्वस्था जाता? इति।

तदा सुबुद्धिः नाम मन्त्री उत्थाय उक्तवान्– "प्रभो, शिवशर्मणा या चिकित्सा कृता तस्याः परिणामतः एव शर्वाणी स्वस्था जाता इत्यत्र नास्ति कोऽपि सन्देहः" इति।

सुकीर्तिः नाम अपरः मन्त्री उत्थाय उक्तवान्– "प्रभो, मम तु विश्वासः यत् जीवदत्तेन कृतायाः चिकित्सायाः कारणतः

मृतसमाना अपि शर्वाणी उत्साहवती जाता इति। शिवशर्मणः चिकित्सायाः परिणामः कोऽपि न जातः इति तु स्फुटम् एव'' इति।

तदा शशिधरः नाम मन्त्री उत्थाय उक्तवान्– ''प्रभो, यद्यपि उभाभ्यां वैद्याभ्यां चिकित्सा कृता, तथापि चिकित्सा तु एका एव आसीत्। शर्वाणी स्वस्था जाता यत् तत्र उभयोः अपि चिकित्सायाः परिणामः दृश्यते। अतः उभौ अपि सम्माननार्हौ'' इति।

राजा अनङ्गपालः क्षणकालं विचिन्त्य उक्तवान्– ''आम्, शशिधरेण युक्तम् एव उक्तम्। उभौ अपि सम्माननार्हौ एव। लोके अस्वास्थ्यस्य चिकित्सा न केवलं शारीरकतया, अपि तु मानसिकतया अपि भवेत्। यथा मानवेषु तथैव पशुषु अपि। शारीरकतया नितरां दुर्बलः चिकित्सया स्वास्थ्यं प्राप्य अपि उत्साहवान् तु न भवति। शर्वाण्याः विषये एवम् एव जातम्। शिवशर्मणः चिकित्सा तु परिणामकारिणी एव आसीत्। किन्तु अस्वास्थ्यसमये शर्वाण्याः मनोबलं सर्वथा नष्टम् आसीत्। तच्च मनोबलं जीवदत्तस्य चिकित्सया सा प्रतिप्राप्नोत्'' इति।

राज्ञः वचनं श्रुत्वा सर्वे मन्त्रिणः सभासदः च अङ्गीकारपूर्वकं शिरः चालितवन्तः।

राजा स्वस्य कथनम् अनुवर्तितवान्– ''स्वस्य पुरतः एव तडागे जलविहारे मग्नानां गजानां दर्शनतः शर्वाण्यां जलविहारेच्छा तीव्रा जाता। सा महता प्रयत्नेन उत्थितवती। मन्दं गत्वा जलविहारे मग्ना जाता। एवं तया मनोबलं प्रतिप्राप्तम्। शिवशर्मणा शारीरकचिकित्सा कृता, जीवदत्तेन तु मानसिकी चिकित्सा कृता। उभयोः चिकित्सायाः परिणामतः शर्वाणी पूर्णतः स्वस्था जाता। अतः उभौ वैद्यौ अपि सम्माननार्हौ'' इति।

सर्वे सभासदः हर्षध्वनिना राज्ञः निर्णयं समर्थितवन्तः। राजा उभयोः अपि वैद्ययोः सामर्थ्यस्य प्रशंसां कृत्वा योग्येन क्रमेण तौ सम्मानितवान्।



# आत्मस्तुतिनिपुणः

कस्यचित् कार्यस्य निमित्तं श्रीरामः नगरं गतवान्। कार्यं समाप्य पादाभ्याम् एव स्वग्रामं प्रति प्रस्थितवान् च। किञ्चिद्दूरं यदा गतं तदा तेन एव मार्गेण गच्छन् धीरेन्द्रः मिलितः। श्रीरामस्य ग्रामः तु धीरेन्द्रस्य ग्रामात् पूर्वम् एव आसीत्। तौ परस्परपरिचयं प्राप्य वार्तालापं कुर्वन्तौ अग्रे गतवन्तौ।

श्रीरामः वाचाटः आसीत्। आत्मस्तुतौ सः निपुणः आसीत्। वार्तालापस्य मध्ये यदा रोगस्य विषयः आगतः तदा श्रीरामः उक्तवान्– "अस्माकं ग्रामे रोगी कोऽपि नास्ति एव" इति।

एतत् श्रुत्वा धीरेन्द्रः आश्चर्यचकितः। तस्य मुखात् किमपि वचनं न निर्गतम्। तौ अग्रे गतवन्तौ। श्रीरामस्य ग्रामः प्राप्तः अपि। तस्य ग्रामस्य आरम्भे एव कश्चित् कृशकायः गृहस्य पुरतः उपविश्य कासमानः आसीत्। एतत् दृष्ट्वा श्रीरामं पृष्टवान् धीरेन्द्रः– "किं मित्र! किञ्चित्पूर्वम् एव भवान् उक्तवान् आसीत् यत् मम ग्रामे रोगी कोऽपि नास्ति इति। किन्तु तत्र दृश्यमानः तु नितराम् अस्वस्थः। तस्य मरणम् अपि आसन्नम् इति भाति। कथम् एतत्?" इति।

एतं प्रश्नं श्रुत्वा श्रीरामः क्षणकालं सम्भ्रान्तः। किन्तु अनन्तरक्षणे एव सः उक्तवान्– "स तु अस्माकं ग्रामस्य वैद्यः। ग्रामे अस्वस्थः कोऽपि कदापि न भवति खलु? अतः मौनम् उपविश्य दिनानि यापयति सः। आयस्य अभावतः एवं कृशः जातः सः। वैद्यस्य एतस्य एषा स्थितिः एव, 'अस्माकं ग्रामे रोगी कोऽपि नास्ति' इत्येतत् मम वचनं समर्थयति। एवं ननु?" इति।

धीरेन्द्रः श्रीरामस्य वाक्चातुर्यं दृष्ट्वा पुनरपि आश्चर्यचकितः।






(महेन्द्रनाथः द्वारपालकस्य मुखात् ज्ञातवान् यत् युवराज्ञ्याः निमित्तं शिबिकायाः व्यवस्था कृता अस्ति इति। तस्याम् एव रात्रौ सः मायाभवनं प्रविश्य युवराज्ञीम् अभिज्ञाय सर्वं निवेदितवान्। तदा युवराज्ञी उक्तवती यत् अहम् इदानीम् एव भवता सह इतः निर्गन्तुं सिद्धा इति। अनन्तरं तौ तस्यां रात्रौ एव जागरूकतया मायाभवनात् निर्गतवन्तौ। तदनन्तरम्....)

उषसि एव उत्थाय वृद्धा स्वामिनः आज्ञायाः पालनार्थं युवराज्ञीम् उत्थापयितुं तस्याः प्रकोष्ठं गतवती। किन्तु तत्र तया युवराज्ञी न दृष्टा। आश्चर्यं भीतिं च अनुभवन्ती सा पार्श्वप्रकोष्ठं गतवती। तत्रापि तया युवराज्ञी न दृष्टा। एतेन वृद्धायाः भीतिः प्रवृद्धा। सा झटिति अन्येषु प्रकोष्ठेषु अपि अन्वेषणं कृतवती। किन्तु युवराज्ञी कुत्रापि न दृश्यते! सा परिचारिकायाः मालिन्याः प्रकोष्ठं गतवती। वातायनात् बहिः दृष्टवती। किन्तु युवराज्ञी कुत्रापि न दृष्टा।

वृद्धा भीतिम् अनुभवन्ती भवनस्य अधोभागम् आगतवती। तत्र तु द्वारम् उद्घाटितम् आसीत्। सा झटिति बहिर्द्वारसमीपं गतवती। तत् तु द्वारं पिहितम् आसीत्। द्वारे कीलितः तालः दृश्यते स्म।



उत्थाप्य आज्ञापितवती वृद्धा– ''झटिति आभरणानि धृत्वा प्रयाणार्थं सिद्धा भवतु'' इति।

मालिनी विना विरोधं वृद्धायाः वचनं पालितवती। आभरणादिभिः भूषितया मालिन्या सह वृद्धा भवनस्य अधोभागं गतवती। तत्र शिबिका आगता आसीत्। शिबिका स्वनिमित्तम् एव आगता अस्ति इत्यत्र विश्वासः नास्ति मालिन्याः। अतः सा सन्देहेन वृद्धां पश्यन्ती पृष्टवती– ''मया एव अत्र उपवेष्टव्यं वा? कुत्र गन्तव्यं मया?'' इति।

तदा वृद्धा दृढस्वरेण उक्तवती– ''भवत्याः निमित्तम् एव एषा शिबिका। कुत्र गमनम् इति भवत्या ज्ञातव्यं नास्ति। शिबिकया सह अहम् अपि आगमिष्यामि। अतः काऽपि चिन्ता मास्तु भवत्याः। मया यथा उच्यते तथा आचरतु तावत्। एषा स्वामिनः आज्ञा इति स्मरतु। आज्ञापालनमात्रं भवत्याः कार्यम्'' इति।

मालिनी मौनं गत्वा शिबिकायाम् उपविश्य जवनिकाम् अधः कृतवती। शिबिकावाहकाः शिबिकाम् उन्नीतवन्तः। भवनस्य द्वारं पिधाय वृद्धा अपि शिबिकाम् अनुसृतवती।

मायाभवनतः निर्गतौ महेन्द्रनाथः युवराज्ञी विद्यावती च एकं मार्गं दृष्टवन्तौ। तौ जागरूकतया तम् अरण्यमार्गम्

किन्तु द्वारपालकः तत्र कुत्रापि न दृष्टः।

वृद्धा परिवृत्य दीर्घपदं स्थापयन्ती भवनस्य अन्तः गतवती। अचिरात् एव शिबिकायाः आगमनं निरीक्षितम् आसीत्। स्वामिनः आदेशः आसीत् यत् शिबिकायां युवराज्ञीम् उपवेश्य तया सह भवत्या आगन्तव्यम् इति। किन्तु इदानीं युवराज्ञी एव न दृश्यते। किं करणीयम् इदानीम्? भीत्या मौनम् उपवेशनेन न किमपि प्रयोजनम्। अतः वृद्धा झटिति एकम् उपायं चिन्तितवती। सा झटिति परिचारिकायाः मालिन्याः प्रकोष्ठं गतवती।

मालिनी इतोऽपि मृदुले तल्पे शयाना निद्रासुखम् अनुभवन्ती आसीत्। ताम्

अनुसृतवन्तौ। यदि कोऽपि शब्दः श्रूयते तर्हि तौ पृथग्भूय निलीय तिष्ठतः। परितः परिशील्य अपायः कोऽपि नास्ति इति निश्चित्य अग्रे गच्छतः च। किञ्चित्कालानन्तरं तौ शिबिकावाहकानां ध्वनिं श्रुतवन्तौ। शिबिकावाहकाः मन्दस्वरेण किमपि गीतं गायन्ति स्म। महेन्द्रनाथः विद्यावती च झटिति गुल्मस्य पृष्ठतः निलीय स्थितवन्तौ। शिबिकावाहकाः काञ्चित् शिबिकाम् उन्नीय अग्रे गतवन्तः। वृद्धा शिबिकाम् अनुसृत्य गच्छन्ती आसीत्। तस्यां शिबिकायां का स्यात् इति न ज्ञातं युवराज्ञ्या।



"युवराज्ञि! आवाभ्यां विशेषजागरूकता आश्रयणीया। यदि वेषपरिवर्तनं क्रियेत तर्हि वरं स्यात्" इति उक्तवान् महेन्द्रनाथः।

"योग्या सूचना भवतः। अन्ये झटिति आवाम् अभिज्ञातुं यथा न शक्नुयुः तथा वेषपरिवर्तनं बरम् एव" इति उक्तवती युवराज्ञी।

यावत् प्रातःकालः जातः तावता शिबिका विशालम् अङ्गणसदृशं प्रदेशं गता आसीत्। तत्र अपरा शिबिका स्थिता दृष्टा। शिबिकायाः समीपे त्रयः अश्वारोहिणः आसन्।

तेषु कश्चन अश्वारोही अग्रे आगत्य वृद्धाम् उक्तवान्– "युवराज्ञीं सूचयतु यत् तया ततः अवतीर्य एतस्यां शिबिकायाम् उपवेष्टव्यम् इति" इति।

तदा आश्चर्यं प्रकटयन्ती पृष्टवती वृद्धा– "स्वामी कुत्र? तेन सह वार्तालापः करणीयः अस्ति मया। सः कुत्र?" इति।

"सः कस्मिंश्चित् अनिर्देश्ये स्थले अस्ति। सः माम् आज्ञापितवान् अस्ति यत् युवराज्ञी सकुशलम् आनेतव्या इति। अतः इतः परं युवराज्ञ्याः नयनव्यवस्थाम् अहं करिष्यामि। भवती एतया एव शिबिकया मायाभवनं प्रतिगन्तुम् अर्हति" इति आज्ञास्वरेण उक्तवान् सः अश्वारोही।

अश्वारोहिणः स्वरः स्वामिनः स्वरेण सदृशः इव भासते स्म। सा आश्चर्येण तं दृष्टवती। किन्तु तस्य मुखे श्मश्रु न दृश्यते



च जागरूकतया पर्वतशिखरात् अधः गन्तुम् उद्युक्तौ। मध्याह्नसमये तौ पर्वतमूलभागं प्राप्तवन्तौ। किञ्चित् विश्रान्तिसुखम् अनुभूय तौ पुनः अपि ततः अग्रे प्रस्थितवन्तौ।

सूर्यास्तसमये तौ कस्यचित् कुटीरस्य समीपम् आगतवन्तौ। पूर्वम् अशिषा अनुगृह्य महेन्द्रनाथं प्रेषितवतः मुनेः कुटीरः आसीत् सः। महेन्द्रनाथः मुनिविषये, ततः प्राप्तस्य अङ्गुलीयकस्य च विषये युवराज्ञीं सर्वं निवेदितवान्। पूर्वं यत् वचनं दत्तम् आसीत् तत् स्मरन् महेन्द्रनाथः कुटीरसमीपं गतवान्। युवराज्ञी तम् अनुसृतवती।

तावता मुनिः कुटीरात् बहिः आगतः। सः महेन्द्रनाथं प्रीत्या पश्यन् उक्तवान्– "आगच्छतु वत्स! भवान् कार्यं साधयिष्यति इति तु मम दृढः विश्वासः आसीत् एव। अहं भवतः प्रतीक्षां कुर्वन् आसम्। वीरगिरिराज्यस्य युवराज्ञि! स्वागतं भवत्याः" इति।

"आवयोः आगमनं कथं ज्ञातं भवता? कः तां वार्तां निवेदितवान्, येन भवान् आवयोः प्रतीक्षां कुर्यात्?" इति आश्चर्येण पृष्टवान् महेन्द्रनाथः।

तदा मुनिः महेन्द्रनाथस्य हस्ते स्थितम् अङ्गुलीयकम् अङ्गुल्या निर्दिशन् उक्तवान्– "वत्स! भवतः हस्ते यत् अङ्गुलीयकम् अस्ति तादृशम् एव मम हस्ते अपि अस्ति। तयोः अपूर्वं वैशिष्ट्यम् अस्ति।

स्म। किन्तु तत्र क्षात्रं तेजः सुस्पष्टं दृश्यते स्म। 'एषः कश्चन राजकुलोत्पन्नः' इति ज्ञातवती वृद्धा।

अनन्यगतिका सा मालिनीं शिबिकातः अवतार्य अन्यस्यां शिबिकायाम् उपवेश्य– "एते भवतीं सकुशलं स्वामिसमीपं नेष्यन्ति। भवती निश्चिन्ता भवतु" इति उक्त्वा शिबिकायाः जवनिकाम् अधः कृतवती।

अपरा शिबिका ततः निर्गता। अश्वारोहिणः तां शिबिकम् अनुसृतवन्तः। मायाभवनतः आनीतायां शिबिकायाम् उपविश्य वृद्धा प्रतिप्रस्थितवती।

सूर्योदयः जातः आसीत्। मार्गादिकं स्फुटं दृश्यते स्म। महेन्द्रनाथः युवराज्ञी विद्यावती



अहं यदा एतत् अङ्गुलीयकं धरामि तदा भवत्समीपे स्थितम् अङ्गुलीयकं भवन्तं मत्समीपम् आनेष्यति। किन्तु एवम् अङ्गलीयकं प्रेरयति इति भवान् अपि ज्ञातुं न शक्नोति'' इति।

''अहो, एवं वा वस्तुस्थितिः?'' इति आश्चर्यपूर्वकं वदन् महेन्द्रनाथः मुनिं भक्त्या नमस्कृतवान्।

''भवतोः आगमनं महते सन्तोषाय। अद्य अत्रैव तिष्ठन्तौ भवन्तौ रात्रिं यापयताम्'' इति सूचितवान् मुनिः।

रात्रौ शयनात् पूर्वं महेन्द्रनाथः युवराज्ञी च स्वकीयम् अनुभवं मुनिं निवेदितवन्तौ। सर्वम् अपि प्रीत्या श्रुतवान् मुनिः।

अनन्तरदिने प्रातः मुनिः महेन्द्रनाथं युवराज्ञीं च स्वसमीपम् आहूय उक्तवान्– ''भवद्भ्यां सह अहम् अपि राजधानीम् आगमिष्यामि। तेन भवतोः रक्षणं तु कृतं भविष्यति। बहोः कालात् अनन्तरं कर्तव्यस्य पूरणार्थं मया कश्चन अवकाशः प्राप्तः भविष्यति अपि'' इति।

''भवतः वचनस्य कः आशयः इति न ज्ञातं मया'' इति वदन् महेन्द्रनाथः मुनिम् आश्चर्येण दृष्टवान्।

''मम जीवनस्य कथा श्रुता चेत् मदीयः आशयः ज्ञातः भविष्यति'' इति सनिःश्वासम् उक्तवान् मुनिः।

''श्रावयतु तावत् सर्वम् अपि'' इति कुतूहलेन उक्तवान् महेन्द्रनाथः।

''सा च काचित् दुःखमयी कथा। तां संक्षेपेण श्रावयिष्यामि'' इति उक्त्वा कथां श्रावितवान् मुनिः।

''महिमपुरीराज्यस्य विषये भवद्भ्यां श्रुतम् एव स्यात्। तस्य देशस्य युवराजः वीरेन्द्रनाथः युवकः आसीत्। कदाचित् तदीयः पिता मृगयार्थम् अरण्यं गतः, तत्रैव प्राणैः वियुक्तः अभवत् अपि। एवम् एकविंशतितमे वयसि वीरेन्द्रनाथः राजा जातः। अचिरात् एव तदीया माता अपि दिवङ्गता। मरणसमये सा स्वपुत्र्याः ऐश्वर्यायाः योगक्षेमनिर्वहणभारं वीरेन्द्रनाथे आरोप्य इहलोकव्यवहारं समापितवती।

दुर्लभा। अस्माकं हितार्थम् एव माता कदाचित् निन्दति, ताडयेत् अपि। तदर्थम् एवं परिवारत्यागः सर्वथा न उचितः। शीघ्रं गत्वा मातुः अश्रूणि मार्जयतु तावत्'' इति।

लक्ष्मणस्य उपदेशस्य प्रभावतः लघुपिशाची अरण्यस्थायाः मातुः समीपं गतवती। तत्र तु तया दृष्टं यत् वस्तुतः अपि माता अश्रूणि स्रावयन्ती अस्ति इति! लघुपिशाची लक्ष्मणस्य उपदेशस्य घटनां मातरं विस्तरेण निवेदितवती। तदा माता पिशाची उक्तवती– ''भवतीं हितम् उपदिश्य यः मत्समीपं प्रेषितवान्, तस्य सज्जनस्य साहाय्यं मया अवश्यं करणीयम्'' इति। अनन्तरं सा प्रभूतं सुवर्णं स्वीकृत्य ततः प्रस्थितवती। मार्गं दर्शयितुं मात्रा सह प्रस्थितवती लघुपिशाची।

यदा ते पिशाच्यौ लक्ष्मणस्य गृहस्य समीपं गतवत्यौ तदा लक्ष्मणः पुत्र्याः व्यवहारं निन्दन् वदन् आसीत्– ''आत्महत्यया किं वा साधितं भवेत्? यत् साधनीयं तत् जीवद्भिः एव साधनीयम्। आत्महत्या घोरपापम्'' इति। तदा तत्र आगता पिशाची लक्ष्मणाय सुवर्णग्रन्थिं दत्त्वा कृतज्ञतावचनानि उक्तवती। तदा लक्ष्मणः आश्चर्यम् अनुभवन् उक्तवान्– ''वस्तुतः कृतज्ञता मया वक्तव्या। भवत्या यत् सुवर्णं दत्तं तत् लक्षाधिकरूप्यकमूल्यकं भवेत्। आजीवनं परिश्रमेण अपि मया एतावत् सम्पादयितुं न शक्येत प्रायः'' इति।

लघुपिशाची इच्छां प्रकटितवती यत् अहं



कानिचन दिनानि लक्ष्मणस्य गृहे एव वासं करिष्यामि इति। तदा तां तर्जयन्ती माता पिशाची उक्तवती– "वत्से! अस्माभिः सर्वदा अपि उपकारः एव करणीयः, न तु अपकारः। अपकारः कृतः चेत् वयं कदापि पिशाचजन्मतः मुक्तिं न प्राप्नुयाम" इति।

एवम् उक्ते अपि लघुपिशाची मानवानां मध्ये वासः करणीयः इति इच्छां न परित्यक्तवती। तदा लक्ष्मणः किञ्चित् विचिन्त्य उक्तवान्– "मम पुत्र्याः पतिगृहस्य सदस्याः तां बहुधा पीडयन्तः सन्ति। एषा लघुपिशाची मम पुत्र्याः सह तस्याः पतिगृहं गच्छतु। यदा ते लक्ष्मीं पीडयिष्यन्ति तदा एषा तान् पीडयतु" इति।

एतं प्रस्तावं पिशाची अङ्गीकृतवती। एतेन लघुपिशाची नितरां सन्तुष्टा। "अहो सौभाग्यं मम! मां दृष्ट्वा यत्र जनाः भीतिं प्राप्नुयुः तादृशे स्थले वासः! मानवपीडनार्थं यथेष्टम् अवकाशः। अत्र तु मत्तः कोऽपि भीतः न भवति। अतः अत्र वासे इच्छा अपि नास्ति मम" इति वदन्ती सा नृत्यम् अकरोत्।

हसित्वा ततः गतवती पिशाची। अनन्तरदिने लक्ष्म्या सह आगच्छत् लघुपिशाची।

स्नुषया आनीतं धनं प्राप्य श्वश्रूश्वशुरौ कानिचन दिनानि सन्तोषेण स्थितवन्तौ। अनन्तरं क्रमशः तयोः पीडा आरब्धा। यदा यदा तौ लक्ष्मीं पीडयतः तदा तदा पिशाची गृहं प्रविश्य पात्रादिकं पातयन्ती कोलाहलं जनयति स्म। एतस्याः घटनातः लक्ष्म्याः श्वश्रूश्वशुरौ नितरां भीतौ। प्रवृत्तं सर्वं दृष्ट्वा श्रुत्वा च प्रतिवेशिनी तौ उक्तवती– "धननिमित्तं भवन्तौ स्नुषां पीडयतः यत् तस्य फलम् एतत्। स्नुषायाः पीडनं परित्यक्तं चेत् पिशाचपीडा अपि निवृत्ता भवेत्। अन्यथा घोराः परिणामाः सोढव्याः भवेयुः" इति।

एतेन लक्ष्म्याः श्वशुरौ स्नुषायाः पीडनं परित्यक्तवन्तौ। एवं लक्ष्म्याः कष्टानि अपगतानि। लक्ष्म्याः सन्तोषं दृष्ट्वा तृप्ता पिशाची ततः स्वस्थानम् अगच्छत्।






# उत्तराधिकारी

कर्तव्यपरायणः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवन्तम् एतादृशे घोरे कार्ये यः नियोजितवान् सः भवतः पिता गुरुः वा न स्यात् खलु? यतः तादृशाः पुत्रस्य शिष्यस्य वा शक्तिसामर्थ्यादिकं दृष्ट्वा अपि क्षणिककोपस्य मानसिकदौर्बल्यस्य वा कारणतः अनादरं प्रकटयन्ति। एतत् वचनं समर्थयितुम् अहं सत्यदेवस्य कथा श्रावयामि। कथां शृण्वतः भवतः मार्गायासः अपि परिहृतः स्यात्। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

चित्रपुरनामके ग्रामे सर्वदा अपि

## वेतालकथा




अस्ति। अपरस्मिन् मार्गे सूर्यकीर्तिः अस्ति। तयोः अन्यतरं साहाय्यं प्रार्थयतु भवान्'' इति।

सत्यदेवः महता कष्टेन पदानि स्थापयन् अग्रे गत्वा एकं गृहं प्राप्य द्वारशब्दं कृतवान्। कश्चित् द्वारम् उद्घाटितवान्। तं पृष्टवान् सत्यदेवः— ''सूर्यकीर्तिवर्यस्य गृहं खलु एतत्?'' इति।

तदा सः पुरुषः कोपेन— ''अहम् अस्मि चन्द्रसेनः। मम पुरतः मम शत्रोः सूर्यकीर्तेः नाम वदतः भवतः कियत् धैर्यम्? इतः गच्छतु'' इति उक्तवान्।

तदा सत्यदेवः स्वस्य परिस्थितिं निवेद्य— ''नितराम् अस्वस्थाय मह्यम् आश्रयं ददातु कृपया'' इति प्रार्थितवान्। किन्तु चन्द्रसेनः पुनरपि कोपेन— ''कश्चित् भवन्तं नामद्वयम् उक्तवान्। किन्तु भवान् मम शत्रोः सूर्यकीर्तेः नाम एव स्मृतवान्, न तु मम। अतः भवते आश्रयः न दीयते। इतः निर्गच्छतु तावत्'' इति उक्त्वा द्वारं सशब्दं पिहितवान्।

सत्यदेवः ततः मन्दं पदं स्थापयन् सूर्यकीर्तेः गृहं गत्वा आश्रयं प्रार्थितवान्। तदा सूर्यकीर्तिः— ''भवान् प्रथमं चन्द्रसेनस्य गृहं गत्वा ततः अत्र आगतः खलु? एतत् मम जनानां द्वारा ज्ञातवान् अहम्। प्रथमं तत्र आश्रयं प्रार्थितवते भवते मम गृहे आश्रयः कदापि न लभ्यते'' इति कठोरतया उक्तवान्।

अनन्तरं सत्यदेवः अन्येषु बहुषु गृहेषु

कलहमारणादयः प्रवर्तन्ते स्म। प्रेमसद्भावनादयः तत्र नाम्ना अपि न आसन्। कदाचित् सत्यदेवः नाम कश्चन मध्यवयस्कः तं ग्रामम् आगतवान्। सः नितराम् अस्वस्थः आसीत्। एतस्मिन् ग्रामे कस्यचित् गृहे आश्रयं प्राप्य विश्रान्तिः स्वीकरणीया इति निश्चित्य सः अभिमुखम् आगच्छन्तं कञ्चित् स्थगयित्वा स्वकीयां परिस्थितिं निवेदितवान्।

तदा सः पुरुषः नमस्कारपूर्वकं सत्यदेवम् उक्तवान्— ''श्रीमन्! अहं कश्चन निर्धनः। रात्रौ वृक्षस्य अधः शयानः दिनानि यापयामि। निराश्रयः अहं भवते आश्रयं दातुं न शक्नोमि। एतस्मिन् मार्गे चन्द्रसेनः

आश्रयं प्राप्तुं प्रयत्नं कृतवान्। किन्तु कोऽपि तस्मै आश्रयं न दत्तवान्। "यस्मै सूर्यकीर्ति-चन्द्रसेनौ आश्रयं न दत्तवन्तौ तस्मै वयम् अपि आश्रयं दातुं न शक्नुमः" इति उक्तवन्तः सर्वेऽपि।

सत्यदेवः स्वस्य दौर्भाग्यं निन्दन् अन्यं ग्रामं गन्तुम् इष्टवान्। किन्तु तस्य शरीरे तावत् सामर्थ्यं तु न आसीत्। चित्रपुरात् किञ्चिद्दूरं गत्वा अग्रे गन्तुम् अशक्नुवान् सत्यदेवः कस्यचित् वृक्षस्य अधः उपविष्टवान्। अल्पे एव काले, पूर्वं यः सूर्यकीर्ति-चन्द्रसेनयोः नाम सूचितवान् आसीत् सः एव तत्र आगतः। सः सत्यदेवं दृष्ट्वा उक्तवान्— "मित्र! प्रवृत्तं सर्वं ज्ञातं मया। भवत्कारणतः सूर्यकीर्ति-चन्द्रसेनयोः मध्ये कलहः उत्पन्नः अस्ति। भवान् अत्रैव तिष्ठति चेत् भवतः अपायः स्यात् कदाचित्। अतः अन्यं ग्रामं गच्छतु कृपया। इतः गमनं सर्वथा दुःसाध्यं चेत् गुल्मानां पृष्ठतः निलीय वा तिष्ठतु" इति।

सत्यदेवः अनतिदूरे स्थितानां गुल्मानां समीपं गतवान्। उपविश्य कानिचन सस्यानि उन्मूल्य शयनार्थं स्थलं कृतवान् च। तावता गुल्मानां मध्यतः उभौ सर्पौ बहिः आगत्य सत्यदेवम् अपश्यन्तौ इव ततः निर्गतवन्तौ। निश्शक्तिकारणात् तत्रैव शयानः सत्यदेवः अचिरात् एव निद्रां प्राप्तवान्।

अनन्तरदिने यदा सः जागरितः तदा तस्य पार्श्वे कश्चन अजगरः दृष्टः। अजगरस्य



पार्श्वे स्थितिं स्मरन् सत्यदेवः क्षणकालं आश्चर्येण भीत्या च स्तब्धः। किन्तु सत्यदेवस्य पार्श्वपरिवर्तनस्य कारणतः अजगरः मौनं ततः निरगच्छत्।

अनन्तरक्षणे सत्यदेवेन लक्षितं यत् आत्मनः अस्वस्थता समूलं नष्टा अस्ति इति। शरीरे नवोत्साहः अपि दृश्यते स्म। 'गुल्मानां मध्ये औषधसस्यं किमपि स्यात्। तस्य परिणामतः एवं जातं स्यात्' इति आलोच्य सत्यदेवः तत्र तादृशस्य विशिष्टसस्यस्य अन्वेषणं कृतवान्। अल्पेन एव प्रयासेन सः तत् विशिष्टं सस्यं प्राप्तवान्।

तावता तत्र जनानां कोलाहलः श्रुतः। सत्यदेवः गुल्मानां मध्यतः मार्गम् आगत्य

दृष्टवान्। तत्र द्वौ गणौ कलहायमानौ दृष्टौ। मूर्च्छां गतौ द्वौ तरुणौ अपि तेन दृष्टौ।

प्रवृत्तं तु एवम्– चन्द्रसेन-सूर्यकीर्त्योः पुत्रयोः मध्ये केनचित् कारणेन कलहः उत्पन्नः। परस्परं तौ ताडितवन्तौ। व्रणितयोः तयोः शरीरात् रक्तधारा निर्गता। उभौ अपि मूर्च्छां गतवन्तौ। इदानीं स्वस्य अनुयायिभिः सह आगतौ सूर्यकीर्ति-चन्द्रसेनौ परस्परयुद्धार्थं सिद्धौ जातौ।

सत्यदेवः व्रणितौ मूर्च्छितौ तौ तरुणौ दृष्ट्वा उक्तवान्– "सौभाग्यवशात् एतौ इतोऽपि जीवतः। यदि भवन्तः कलहं स्थगयेयुः तर्हि अहम् एतयोः चिकित्सां कुर्याम्" इति।

कलहः झटिति स्थगितः। चन्द्रसेनः सूर्यकीर्तिः च सत्यदेवम् अभिजानन्तौ पृष्टवन्तौ– "स्वयम् अस्वस्थः भवान् आत्मनः चिकित्सायाम् एव असमर्थः सन् एतयोः चिकित्सां कथं वा कुर्यात्?" इति।

एतत् श्रुत्वा सत्यदेवः शान्तस्वरेण उक्तवान्– "अहं कश्चन वैद्यः अस्मि। घोरेण केनचित् व्याधिना पीडितः आसम् अहम्। तस्य व्याधेः चिकित्सा कस्मिंश्चित् अपि ग्रन्थे न सूचिता। अतः जीविते आशां परित्यज्य अहं हिमालयम् उद्दिश्य प्रस्थितवान् आसम्। अत्र कानिचन अपूर्वाणि सस्यानि सन्ति। तेषां सम्पर्कतः एकरात्र्यभ्यन्तरे घोरः अपि मम व्याधिः समूलं नष्टः। इदानीम् अहं स्वस्थः। एतस्य सस्यस्य मूलं क्रूरप्राणिनः अपि साधून् करोति। मरणावस्थायां स्थितान् अपि उज्जीवयति" इति।



"अस्तु तर्हि। भवान् चिकित्सां करोतु। किन्तु एतस्य मम शत्रोः पुत्रं रक्षन् भवान् मम पुत्रस्य रक्षणं कर्तुं न शक्नोति चेत् भवन्तं यमसदनं प्रेषयिष्यामि अहम्" इति उक्तवान् सूर्यकीर्तिः। चन्द्रसेनः अपि तथैव उक्तवान्।

सत्यदेवः उभौ अपि गुल्मसमीपं नीत्वा चिकित्सां कृतवान्। उभौ अपि तरुणौ क्षणमात्रेण स्वस्थौ जातौ। एतेन सूर्यकीर्तिः चन्द्रसेनः चापि नितरां सन्तुष्टौ। तौ उभौ अपि सत्यदेवं स्वगृहं प्रति आहूतवन्तौ।

"एतस्मिन् ग्रामे अहं स्वास्थ्यं प्राप्तवान्। अतः एतस्य ग्रामस्य हितार्थं मया किमपि करणीयम्। अहं वृत्त्या वैद्यः। एतस्मिन् ग्रामे बहवः अस्वस्थाः दृश्यन्ते। अतः कानिचन दिनानि अत्र स्थित्वा चिकित्सां करिष्यामि अहम्" इति उक्तवान् सत्यदेवः।

सत्यदेवः न केवलं वैद्यः, अपि तु पण्डितः विवेकी च। सः निश्चितवान् यत् कथमपि एतस्मिन् ग्रामे स्थिताः अज्ञानद्वेषासूयादयः दूरीकरणीयाः इति। निःस्वार्थभावनया जनसेवां कुर्वतः तस्य विषये जनानाम् आदरः आसीत्। अतः सः जनान् तत्र तत्र मेलयन् कथादिकं कथयन् नीतिम् उपदिशति स्म।

गच्छता कालेन जनेषु परिवर्तनं जातम्। चित्रपुरीयाणां बुद्धिः प्रतिभा च विकसिता। परिश्रमशीलता च प्रवृद्धा। एकवर्षाभ्यन्तरे जनानाम् आयः प्रवृद्धः।

कदाचित् सत्यदेवः जनान् उक्तवान् यत् अहं स्वग्रामं गच्छामि इति। किन्तु चित्रपुरीयाः तं प्रेषयितुं न सिद्धाः। ते सानुरोधम् उक्तवन्तः





यत् भवता ग्रामप्रमुखत्वभारं निर्वहता अत्रैव वासः करणीयः इति।

किन्तु सत्यदेवः एतत् निराकुर्वन् उक्तवान्– "भवन्तः एव कञ्चित् ग्रामप्रमुखत्वेन चिन्वन्तु" इति।

सर्वे परस्परं समालोच्य उक्तवन्तः– "यदि वयम् अत्रत्यं कञ्चित् ग्रामप्रमुखं कुर्याम तर्हि पुनरपि अत्र द्वेषासूयादयः उद्बुद्धाः भवेयुः। यथापूर्वम् अस्माकं स्थितिः शोचनीया भवेत्" इति।

सत्यदेवः क्षणकालं विचिन्त्य उक्तवान्– "मया मम ग्रामे करणीयं बहु अस्ति। अतः मया अवश्यं गन्तव्यम् एव। किन्तु अचिरात् उत्तराधिकारिणम् अत्र प्रेषयिष्यामि। तं ग्रामप्रमुखं कुर्वन्तु भवन्तः" इति।

जनाः एतं प्रस्तावम् अङ्गीकृतवन्तः। सत्यदेवः स्वग्रामं गतवान्। गृहसदस्यान् प्रवृत्तं सर्वम् उक्तवान् सः। स्वपुत्रं गुणशीलं ग्रामप्रमुखत्वेन चित्रपुरं प्रेषयितुं निश्चितवान् सः। तदर्थम् अपेक्षितं प्रशिक्षणम् अपि आरब्धवान् सः। किन्तु गुणशीलेन व्यवहारसम्बद्धाः विषयाः झटिति न गृहीताः। अतः प्रशिक्षणं दीर्घकालं यावत् अनुवृत्तम्।

पञ्चानां वर्षाणाम् अनन्तरं सत्यदेवः पुत्रं गुणशीलम् उक्तवान्– "भवान् चित्रपुरं गच्छतु। मया दीयमानम् एकं पत्रं तत्र प्रदर्श्य ग्रामप्रमुखत्वं प्राप्नोतु " इति।

गुणशीलः चित्रपुरं गतवान्। किन्तु, तावता दयानिधिः नाम कश्चित् आत्मानं सत्यदेवस्य उत्तराधिकारिणं वदन् ग्रामप्रमुखत्वं प्राप्तवान् आसीत्। चतुर्भ्यः वर्षेभ्यः पूर्वम् एव एषा घटना जाता आसीत्।

गुणशीलः पित्रा दत्तं पत्रं चन्द्रसेनाय दत्त्वा प्रवृत्तं समग्रं निवेदितवान्। तदा चन्द्रसेनः आश्चर्यम् अनुभवन् कैश्चित् जनैः सह दयानिधिसमीपं गत्वा– "भवान् अस्मान् वञ्चितवान्। वस्तुतः भवान् सत्यदेवस्य उत्तराधिकारी न" इति उक्तवान्।

तदा दयानिधिः शान्तस्वरेण– "अहम् एव सत्यदेवस्य उत्तराधिकारी। सत्यदेवस्य मुखात् एव एतत् ज्ञास्यन्ति भवन्तः" इति उक्तवान्।

एतत् श्रुत्वा क्रुद्धः गुणशीलः– ''वस्तुस्थितिः प्रकटिता चेदपि एषः निर्लज्जं व्यवहरति खलु? पदव्यामोहकारणतः औचित्यप्रज्ञा एव विस्मृता एतेन। अये, धिक् भवन्तम्। प्रथमं ग्रामप्रमुखत्वपदं परित्यजतु तावत्'' इति उक्तवान्।



किन्तु दयानिधिः कामपि प्रतिक्रियां न प्रदर्शितवान्। विवादः प्रवृद्धः। जनाः सम्मिलिताः। केचन गुणशीलस्य वचनं समर्थितवन्तः। उभौ पक्षौ जातौ। तौ स्वविचारं समर्थयन्तौ वादविवादं कृतवन्तौ। ततः कलहः ताडनादिकं च प्रवृत्तम्। ग्रामे अशान्तिः प्रसृता। अन्यविधकलहादयः अपि प्रवृद्धाः।

एवं कानिचन दिनानि अतीतानि। तदा गुणशीलः चन्द्रसेनम् उक्तवान्– ''अत्रत्यपरिस्थितौ परिवर्तनं शीघ्रं न भवेत्। अतः मम पितरं सर्वं निवेद्य तम् अत्र आनाययति चेदेव वरं स्यात्'' इति।

अनन्तरं सत्यदेवसमीपं जनः प्रेषितः। सत्यदेवः चित्रपुरम् आगतवान्। सः ग्रामस्य स्थितिं परिशीलितवान्। दयानिधिना सह एकान्ते वार्तालापं कृतवान्। तदा दयानिधिः सत्यदेवस्य पादौ गृहीत्वा क्षमां प्रार्थयन् उक्तवान्– ''श्रीमन्! वस्तुतः पदवीमोहेन अहम् एतं ग्रामं न आगतः। भवतः निर्गमनस्य अनन्तरं ग्रामे पुनः कलहादयः प्रवृद्धाः। तत्काले एतद्ग्रामीणः मम स्नेहितः मत्समीपम् आगत्य सर्वं निवेदितवान्। अनन्तरं तस्य इच्छायाः अनुगुणम् एतस्य ग्रामस्य उद्धारार्थम् अहं ग्रामप्रमुखः जातः। अहं न्याय्येन मार्गेण ग्रामस्य हितं साधितवान्। मया ग्रामोन्नत्यर्थं बहुधा प्रयत्नाः कृताः, साफल्यं प्राप्तम् अपि। किन्तु अत्रान्तरे भवतः पुत्रः एतद्ग्रामम् आगत्य मत्समीपं प्रथमम् अनागत्य चन्द्रसेनस्य समीपं गतवान्। आत्मरक्षणार्थं मया स्ववचनं समर्थितम्। भवान् यथा अत्र आगच्छेत् तथा कृतं च। एषा वस्तुथितिः। यथोचितं निर्णयः भवता करणीयः'' इति।

सत्यदेवः दयानिधिं सान्त्वनवचनानि उक्त्वा, 'दयानिधिः एव मम वास्तविकः

उत्तराधिकारी' इति उद्घोष्य पुत्रेण गुणशीलेन सह स्वग्रामं प्रतिगतवान्।

वेतालः एवं कथां समाप्य अवदत्– ''अये राजन्! कीदृशः निर्णयः सत्यदेवस्य? गुणशीलः ग्रामप्रमुखः स्यात् इति उद्देशेन सत्यदेवः प्रयत्नम् आरब्धवान्। पञ्च वर्षाणि यावत् प्रशिक्षणम् अपि दत्तवान्। किन्तु अन्ते दयानिधिं ग्रामप्रमुखं कृतवान्। दयानिधिः वञ्चकः इति तु सुस्पष्टम्। वञ्चकः कश्चन ग्रामप्रमुखः जातः। समर्थः प्रशिक्षितः च तत् पदं न प्राप्तवान्। कथम् एतत्? कीदृशः एषः निर्णयः सत्यदेवस्य? पुत्रे गुणशीले कोऽपि क्रोधः आसीत् वा सत्यदेवस्य? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''सत्यदेवः विचिन्त्य एव निर्णयं कृतवान्। ग्रामस्य हितार्थम् आदौ अल्पम् असत्यं दयानिधिना उक्तम्। ततः ग्रामहितार्थं निःस्वार्थभावनया कार्यं कृतं, विशेषप्रगतिः साधिता च। एवं स्वयोग्यता तेन प्रमाणीकृता। किन्तु गुणशीलः ग्रामप्रवेशसमये एव पदवीमोहेन युक्तः आसीत्। अतः सः ग्रामे कलहादीनाम् उत्पादने कारणं जातः। एतेन तदीया अनर्हता प्रकटिता जाता। दीर्घं प्रशिक्षणं तस्य स्यात् नाम, किन्तु ग्रामप्रमुखत्वस्य निमित्तम् आवश्यकः विवेकपूर्णः व्यवहारः तस्य न आसीत्। 'पदव्यां योग्यः एव नियोक्तव्यः। तत्समये बन्धुता मैत्री इत्यादिकं मनसि न स्थापनीयम्' इति विवेकः सत्यदेवस्य आसीत्। अतः सः चित्रपुरग्रामस्य हितं मनसि निधाय– 'दयानिधिः एव मम उत्तराधिकारी' इति उद्घोष्य ततः निर्गतवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# चन्दमामानुबन्धः—५२

## अस्मद्देशीया पशुपक्षिसम्पत्—गम्भीरः गजः



अल्पवयस्काः बालाः यथा वर्णमयानि चित्रपुस्तकानि विशेषतः इच्छन्ति तथैव गजस्य उपरि उपविश्य सञ्चारम् अपि विशेषतः इच्छन्ति।

प्रतिवर्षं ये राष्ट्रिय-वीरता-पुरस्कारं प्राप्नुवन्ति ते उपायनरूपेण विविधानि पुस्तकानि, क्रीडनकानि, पदकादीनि च प्राप्नुवन्ति। एतेषां प्राप्तितः यावान् सन्तोषः तैः अनुभूयते ततः द्विगुणितः सन्तोषः गणतन्त्रदिनोत्सवे अलङ्कृतानां गजानाम् उपरि उपविश्य सञ्चारेण प्राप्यते।

प्रतिवर्षम् अस्माकं राजधान्यां प्रचलिष्यमाणे गणतन्त्रदिनोत्सवे गजाः भागं गृह्णन्ति। मैसूरुनगरस्य नवरात्रोत्सवे(दसरा), केरलस्य तिरच्चूरप्रदेशस्य 'पूरम्'उत्सवे च शोभायात्रायां गजाः भवन्ति एव। केषुचित् दक्षिणभारतस्य मन्दिरेषु उत्सवमूर्तेः यात्रायां गजाः भागं वहन्ति।

प्राचीने काले चतुरङ्गबले गजबलस्य विशिष्टं वैशिष्ट्यम् आसीत्। इतिहासात् ज्ञायते यत् चन्द्रगुप्तमौर्यस्य सेनायां १०,००० गजाः आसन् इति।

भूचरेषु जन्तुषु गजः एव स्थूलतमः। गजस्य वशीकरणे न हि विशेषक्लेशः। विविधेषु कष्टकरेष्वपि कार्येषु सः प्रवर्तयितुं शक्यः।

गजस्य औन्नत्यं ३ मीटर् भवेत्, भारः च ४०००-५००० किलो स्यात्। १.४० मीटर् दैर्घ्ययुक्ता एतस्य शुण्डा दृढा, इतस्ततः सञ्चारयोग्या च। शुण्डया आहारं पानीयं च स्वीकृत्य मुखे निवेशयति सः। भूमौ पतितं नाणकसदृशं लघुवस्तु अपि शुण्डया उन्नेतुं शक्नोति सः। (पुं) गजस्य द्वौ दन्तौ भवतः, ययोः च मूल्यम् अत्यधिकम्। गजाः समूहरूपेण निवसन्ति। महाशरीरस्य अपि गजस्य नेत्रे तु लघुनी। किन्तु तदीया घ्राणशक्तिः श्रवणशक्तिः च सुतीक्ष्णा। जननात् पूर्वं गजः २२ मासान् यावत् मातृगर्भे तिष्ठति। गजस्य बुद्धिमत्ता लोके विख्याता अस्ति। प्रीतिगाम्भीर्यादयः उपकारस्मरणं च गजस्य सुप्रसिद्धम्।

प्राचीने काले राजमहाराजाः गजानाम् उपरि उपविश्य पोलोप्रभृतिषु क्रीडासु भागं वहन्ति स्म। भारतस्य केषुचित् पर्वतप्रदेशेषु गजधावनस्पर्धा अपि प्रचलति।

अस्मद्देशीयाः गजाः आफ्रिकादेशस्य गजानाम् अपेक्षया आकारेण अल्पाः भवन्ति।



# आधुनिकं भारतीयसाहित्यम्

मदरासनगरस्य कस्मिंश्चित् चिकित्सालये कार्यं करोति डा. शङ्करी। सा सुन्दरी, 'उत्तमा वैद्या' इति ख्याति प्राप्तवती च। कदाचित् तिरुमूर्तिः नाम कश्चन धनिकः गर्भिण्या पत्न्या सह शङ्कर्याः समीपम् आगच्छति। तिरुमूर्तिं दृष्ट्वा शङ्करी क्षणकालं दिग्भ्रान्ता। पूर्वं गुरुमूर्तिनामकः शङ्कर्याम् अनुरागं प्रदर्श्य कालान्तरे काञ्चित् अन्यां रहसि परिणीय शङ्कर्याः मनसि विप्लवं जनितवान् आसीत्। तिरुमूर्तिः आकारेण

## अखिलन्वर्यस्य कृतिः – 'पोन् मलर्'



गुरुमूर्तिसदृशः एव आसीत्। दिनद्वयाभ्यन्तरे शङ्कर्या ज्ञातं यत् तिरुमूर्तिः गुरुमूर्तिः च यमलौ इति। गुरुमूर्तिः दिवं गतः अस्ति इत्यपि ज्ञातं तया। किन्तु तिरुमूर्तिः तत्पत्नी वा न ज्ञातवन्तौ यत् गुरुमूर्तेः शङ्कर्याः च परस्परानुरागः आसीत् इति।

तिरुमूर्तेः पत्नी शङ्कर्याः पर्यवेक्षणे विशेषक्लेशं विना अपत्यं प्रसूतवती। तिरुमूर्तिः तत्पत्नी च नितरां सन्तुष्टौ। तौ अमूल्यानि उपायनानि दत्त्वा ततः गतवन्तौ।

वस्तुतः तु शङ्कर्याः विषये तिरुमूर्तेः न केवलं कृतज्ञताभावः, अपि तु अनुरागः अपि आसीत्। सः तां परिणेतुम् इच्छति स्म।

'विवाहितः सन् अपि एषः मां परिणेतुं कथम् इच्छति?' इति आश्चर्यम् अनुभूतवती




शङ्करी। अतः सा तिरुमूर्तेः पूर्वचरितस्य अन्वेषणं कृतवती। ततः तया बहवः विषयाः ज्ञाताः। तिरुमूर्तिः, धनम् अस्ति चेत् यत्किमपि साधयितुं शक्यते इति, धनबलतः अकार्यं कृत्वा अपि सुखेन जीवितुं शक्यते इति, ये स्वकार्ये विघ्नम् आचरन्ति तान् धनबलात् विनायासं निवारयितुं शक्यते इति च चिन्तयति इति ज्ञातवती शङ्करी।

कदाचित् तिरुमूर्तिः कुमुदानामिकां तरुणीं शङ्कर्याः चिकित्सालयं प्रति आनयति। ताम् परिणीतवान् आसीत् सः। किन्तु इदानीं ताम् इहलोकात् एव प्रेषयितुम् इच्छति स्म सः। कदाचित् कुमुदा चिकित्सालयात् अदृश्या भवति।

एतस्मिन् एव सन्दर्भे बाल्यस्नेहितः तिरुज्ञानः शङ्कर्याः समीपम् आगच्छति। बाल्यकाले सः बहुधा शङ्कर्याः साहाय्यं कृतवान् आसीत्। अतः शङ्करी तस्मै तिरुमूर्तेः कार्यालये उद्योगं दापयति। किन्तु यदा शङ्करी तिरुमूर्तिं परिणेतुं निराकरणं प्रदर्शयति तदा क्रुद्धः तिरुमूर्तिः तिरुज्ञानम् उद्योगच्युतं करोति। किन्तु एतया घटनया तिरुज्ञानः न खिन्नः। तिरुमूर्तेः दुष्टकार्याणाम् अन्वेषणार्थं सर्वकारेण नियुक्तः गूढचारः आसीत् सः।

कुमुदा शङ्कर्या रक्षिता अस्ति इति वार्ता ज्ञायते। तिरुज्ञानः शङ्करीं परिणेतुम् इच्छति। किन्तु तावता शङ्करी जानाति यत् तिरुमूर्तेः भगिनी राजेश्वरी तिरुज्ञाने अनुरागवती इति। अतः शङ्करी निर्णयति— राजेश्वर्याः अनुरागे विघ्नं न आचरामि इति।

'अखिलन्' इति नाम्ना प्रसिद्धस्य पि.वि. अखिलाण्डंवर्यस्य (१९२२-१९८१) 'पोन् मलर्'(सुवर्णपुष्पम्) नामिकायाः कृतेः कथा एषा। स्वार्थसाधकानां धनिकानां दुष्कृत्यानि, सहनाशीलायाः शङ्कर्याः स्वभावौन्नत्यं, त्यागशीलतां च एषा कृतिः सुचारुरूपेण निरूपयति। 'अखिलन्'वर्येण साहित्याकाडमीप्रशस्तिः ज्ञानपीठप्रशस्तिः चापि प्राप्ता अस्ति।

# भवन्तः जानन्ति वा?

१. 'बोन्साय्'पदस्य कः अर्थः?
२. शकसंवत्सरः केन आरब्धः?
३. स च देशः कः, यः समग्रं खण्डम् अभिव्याप्य तिष्ठति?
४. गान्धीजी सर्वप्रथमं कम् आश्रमं स्थापितवान्?
५. स च देशः कः, यस्य च राष्ट्रगीतम् अतिपुरातनम् अस्ति?
६. काञ्चीपुरस्य तन्तुवायानाम् एकं विशिष्टं नाम अस्ति। तच्च किम्?
७. स च देशः कः, यस्मिन् च एकम् अपि चलनचित्रमन्दिरं नास्ति?
८. भगवतः बुद्धस्य निर्वाणं कुत्र जातम्?
९. मानवशरीरे अतिमहत् अङ्गं किम्?
१०. उत्तरभारते गोमतीनद्याः तीरे स्थितं राजधानीनगरं किम्?
११. 'आधुनिकस्य इटलीदेशस्य पिता' इति कः उच्यते?
१२. देहलीनगरे राष्ट्रपतिभवनस्य (वैसराय् हौस्) रचना केन कृता?
१३. ऐदम्प्राथम्येन पत्रालयमूल्याङ्कं व्यवहारे आनीतवान् देशः कः?
१४. भारतस्य राष्ट्रियकांग्रेस्संस्थायाः शततमवार्षिकोत्सवः कदा आचर्यते?
१५. १९१६ तमे वर्षे एथेन्स्नगरे आचरिते आधुनिके ओलम्पिक्स्क्रीडोत्सवे कति देशाः भागम् ऊढवन्तः आसन्?

# उत्तराणि

१. कुण्डे प्रवर्धमानः पूर्णवृक्षः इति। एषा कला जपानदेशे आरब्धा।
२. कनिष्कसम्राजा। ७८ क्रिस्ताब्दे।
३. आस्ट्रेलियादेशः।
४. 'दि फोनिक् फार्म्'नामकम् आश्रमम्। १९०४ तमे वर्षे, दक्षिणाफ्रिकादेशे दर्बान् समीपे।
५. जपान्देशः। तदीयं 'किमियागो'गीतं नवमे शतके एव लिखितम्।
६. 'सालगार्' इति।
७. सौदी अरब्देशः।
८. कुशिनगरे।
९. यकृत्। (लिवर्)।
१०. लखनऊनगरम्।
११. गारीबाल्डी।
१२. सर् एड्विन् लुटीन्स्वर्येण।
१३. इंग्लेण्ड्।
१४. १९९५ तमे वर्षे।
१५. नव देशाः।



# दध्योदनशर्मा

शारदापुरनामके ग्रामे धनञ्जयशर्मा नाम कश्चित् आसीत्। सः गृहे एकाकी निवसति स्म। तस्य विवाहः न जातः आसीत्। प्रतिदिनं स्वयं पाकं करोति स्म सः। पाके विशेषः कोऽपि न भवति। प्रतिदिनं दध्योदनम् एव! अन्नं दध्ना मिश्रीकृत्य व्याघ्ररणं कृतं चेत् दध्योदनं सिद्धम्! किन्तु धनञ्जयेन सज्जीक्रियमाणं दध्योदनं बहुरुचिकरं भवति स्म। मित्राणि प्रतिवेशिनः च तस्य दध्योदनं खादित्वा प्रशंसन्ति स्म। एवं गच्छता कालेन 'दध्योदनशर्मा' इत्येव तस्य नाम प्रसिद्धं जातम्।

पञ्चविंशतिवर्षीयः दध्योदनशर्मा सर्वकारीये कस्मिंश्चित् कार्यालये कार्यं करोति स्म। प्रतिदिनं दध्योदनस्य खादनात् तस्मिन् नीरसता उत्पन्ना आसीत्। 'यदि अहं विवाहितः भवेयं तर्हि रुचिकरं भोजनं प्राप्येत' इति चिन्तितवान् दध्योदनशर्मा। ततः अनतिकाले एव पार्वतीनामिका कन्या विवाहार्थं निश्चिता अपि।

पार्वती-दध्योदनशर्मणोः विवाहः प्रवृत्तः। पार्वती पतिगृहम् आगतवती अपि। 'इतः परं पत्न्याः द्वारा रुचिकराणि खाद्यानि विविधव्यञ्जनानि च निर्माय सन्तोषेण खादिष्यामि' इति दध्योदनशर्मणः विचारः। किन्तु वराकः सः न जानाति स्म यत् पार्वती पतिद्वारा एव पाकं कारयितुम् इच्छति इति।

प्रातः उत्थाय पार्वती प्रेम्णा पतिम् उक्तवती— "आर्य! अमृतसमानस्य दध्योदनस्य निर्माणे भवान् सुनिपुणः इति श्रुतं मया। अतः तस्य रुचिः अद्य आस्वादनीया खलु मया?" इति।

प्रथमदिने एव पत्न्या सह विवादं कर्तुम् अनिच्छन् दध्योदनशर्मा स्वयं पाकशालां

"भामहः"



गत्वा दध्योदनं निर्मितवान्। अनन्तरदिनेषु अपि पार्वती कमपि व्याजं वदन्ती पतिद्वारा दध्योदनं कारयित्वा खादति स्म। एकदा दध्योदनशर्मा पत्नीं बलात् पाकशालां प्रति प्रेषितवान्। पाकसमये तस्याः हस्तः किञ्चिदिव दग्धः। शीतलजलपात्रे हस्तं स्थापयित्वा रोदनं कृतवती सा। ततः वस्त्रेण हस्तं बद्ध्वा शयनं कृतवती।

एवम् एव मासः अतीतः। तदनन्तरं पार्वती द्वित्रेषु दिनेषु पाकं कृतवती। अलसा सा तावता एव श्रान्ता आसीत्। अतः सा पतिम् उक्तवती– "अहम् अद्य मातृगृहं गच्छामि। परश्वः सायं मात्रा सह प्रत्यागमिष्यामि। मम आगमनसमये आवयोः कृते रुचिकरं दध्योदनं सज्जीकृत्य स्थापनीयं भवता" इति।

दिनद्वयम् अतीतम्। दध्योदनशर्मा पत्न्याः श्वश्र्वाः च निमित्तं दध्योदनं सज्जीकृतवान्। किन्तु रात्रिभोजनकालः अतीतः चेदपि ते न आगते। दध्योदनशर्मा भुक्त्वा शयनं कृतवान्। तेन निद्रा न प्राप्ता आसीत्। तावता कश्चन भिक्षुकः आगत्य आहारं याचितवान्। दध्योदनशर्मा उत्थाय तस्मै भिक्षुकाय किञ्चित् दध्योदनं दत्तवान्।

दध्योदनशर्मणा दत्तं दध्योदनं दृष्ट्वा सः उक्तवान्– "आर्य! गृहे भवतः पत्नी नास्ति इति भाति, यतः भवता दध्योदनं सज्जीकृतम्" इति।

तदा दध्योदनशर्मा खेदेन– "पत्नी गृहे तिष्ठतु वा मा वा, दध्योदननिर्माणं तु मम ललाटे लिखितम् एव। सा अस्ति चेदपि मया एतत् करणीयम् एव" इति उक्त्वा स्वस्य पत्न्याः व्यवहारं निवेदितवान्।

भिक्षुकः गतवान्। दध्योदनशर्मा द्वारं पिधाय निद्रां कृतवान्। मध्यरात्रसमये द्वारताडनशब्दः श्रुतः। दध्योदनशर्मा उत्थाय द्वारम् उद्घाटितवान्। आश्चर्यं नाम द्वारस्य पुरतः कश्चन पिशाचः स्थितः अस्ति! पिशाचदर्शनतः दध्योदनशर्मा आश्चर्यचकितः भीतः च।

तदा सः पिशाचः अवदत्– "अये, भीतिः मास्तु भवतः। मह्यं किञ्चित् दध्योदनं ददातु। खादित्वा प्रतिगच्छामि अहम्" इति।

दध्योदनशर्मा दध्योदनम् आनीय पिशाचाय दत्तवान्। पिशाचः दध्योदनं खादित्वा ततः निर्गतवान्। दध्योदनशर्मा पुनः निद्रां कृतवान्।

पुनः अल्पे एव काले तस्य निद्रा छिन्ना। काचन तोजोमयी आकृतिः तस्य पुरतः स्थिता आसीत्। सा अवदत्– "शर्मन्! उत्तिष्ठतु भोः। उत्तिष्ठतु तावत्" इति।

दध्योदनशर्मा आश्चर्येण नेत्रे उन्मील्य दृष्टवान्। तस्य पुरतः तेजसा प्रकाशमाना ग्रामदेवता स्थिता अस्ति! दध्योदनशर्मा करौ योजयित्वा तां नमस्कृत्य उक्तवान्– "अम्ब! भवती माम् अनुग्रहीतुम् आगतवती इति तु मम महत् सौभाग्यम्" इति।



"भवन्तम् अनुग्रहीतुं न, भवतः अनुग्रहं प्राप्तुम् आगता अहम्। मम भक्तानां मुखात् मया श्रुतं यत् भवता रुचिकरं दध्योदनं निर्मीयते इति। तत् खादनीयम् इति मम महती इच्छा। अतः दध्योदनं खादयतु कृपया" इति उक्तवती ग्रामदेवता।

'अद्य दत्तं चेत् प्रतिदिनम् अपि दध्योदनं दातव्यं भवेत्' इति दध्योदनशर्मणः चिन्तनम्। एतत् जानती उक्तवती ग्रामदेवता– "अद्य दध्योदनं ददातु। प्रतिदिनं दातव्यम् इति अपेक्षां न करोमि अहम्" इति।

दध्योदनशर्मा गृहे विद्यमानं समग्रं दध्योदनं देव्यै समर्पितवान्। देवी तत् सन्तोषेण खादितवती। अनन्तरं तृप्तिं प्रकटयन्ती– "दध्योदनं तु नितरां रुचिकरम् आसीत्। भवतः जीवनं सुखमयं भवतु" इति आशिषा अनुगृह्य ततः अदृश्या अभवत्।

अनन्तरदिने दध्योदनशर्मा यदा गृहम् आगतः तदा पत्नी श्वश्रूः च आगते आस्ताम्। विशेषपाकः सज्जीकृतः आसीत् अपि। दध्योदनशर्मा गृहं प्रविश्य पत्नीम् उक्तवान्– "श्रान्ता भवती किमर्थं पाकं कर्तुम् उद्युक्ता? अहम् एव दध्योदनं सज्जीकुर्यां किल?" इति।

तदा पार्वती भीतिमिश्रितेन स्वरेण उक्तवती– "इतः परं दध्योदनं भवता निर्मातव्यं सर्वथा नास्ति। विश्रान्तिसुखम् अनुभवन् भवान् मम मात्रा सह वार्तालापं

कुर्वन् भवतु। तावता पाकं समापयिष्यामि। यथारुचि भोजनं करोतु" इति।

पत्न्याः मुखात् एतादृशानि वचनानि आगच्छेयुः इति कदापि न निरीक्षितम् आसीत् दध्योदनशर्मणा। पत्न्यां यत् महत् परिवर्तनं जातं तत्र कारणं, दध्योदनं खादितवान् पिशाचः ग्रामदेवता वा स्यात् इति चिन्तितवान् दध्योदनशर्मा। वस्तुतः तु एतस्य परिवर्तनस्य कारणम् आसीत् सः भिक्षुकः।

रात्रौ भिक्षारूपेण दध्योदनं प्राप्य यः गतवान् सः वस्तुतः भिक्षुकः न। सः कश्चन सज्जनः संन्यासी। काषायवस्त्रं धरति स्म सः। जनानां कष्टानां दूरीकरणे सः यथाशक्ति प्रयत्नं करोति स्म अपि। मध्याह्ने रात्रौ च भिक्षया यत् प्राप्यते तेन सः तृप्तः भवति स्म।

दध्योदनशर्मणः मुखात् यदा खेदमिश्रितं वचनं निर्गतं तदा सः निश्चितवान् यत् एतस्य साहाय्यं करणीयम्, एतस्य पत्नी एव पाके आसक्ता यथा भवेत् तथा करणीयम् इति।

अनन्तरदिने सः पार्वत्याः मातृगृहस्य ग्रामं गतवान्। गृहम् आगतं संन्यासिनम् आदरेण नमस्कृत्य फलादिकं समर्प्य 'मम भविष्यं वदतु' इति वदन्ती तस्य पुरतः हस्तं प्रसारितवती पार्वती।

संन्यासी पार्वत्याः हस्तस्य रेखाः किञ्चित्कालं सुसूक्ष्मं परिशील्य उक्तवान्– "वत्से! भवती तु सौभाग्यलक्ष्मीः अस्ति। किन्तु भवत्याः पत्युः जीवने एका आपत् दृश्यते। दध्योदनखादनतः तस्य आरोग्यं नष्टम् अस्ति। यदि इतः परम् अपि सः दध्योदनम् एव खादेत् तर्हि अचिरात् एव सः परलोकं गच्छेत्" इति।

पत्युः अल्पायुष्यं का वा सुमङ्गली इच्छेत्? तस्मिन् एव क्षणे पार्वती निश्चितवती यत् इतः परं मम गृहे दध्योदनं कदापि न भविष्यति इति।

एवं दध्योदनशर्मा दध्योदननिर्माणकार्यात् मुक्तः जातः। तथापि तदीयं नाम तु दध्योदनशर्मा इत्येव अवशिष्टम्।





# लघुपिशाची

कस्मिंश्चित् अरण्ये शतशः पिशाचाः निवसन्ति स्म। तत्र काचन लघुपिशाची अपि आसीत्। कदाचित् तां तदीयाः माता केनचित् कारणेन निन्दितवती। एतेन कुपिता सा लघुपिशाची परिवारं तत्स्थलं च परित्यज्य कञ्चन ग्रामं प्रति अगच्छत्। कस्यचित् गृहस्य पृष्ठभागे स्थितस्य निम्बवृक्षस्य उपरि उपाविशत् च।

तस्य गृहस्य स्वामी लक्ष्मणः निर्धनः आसीत्। तस्य ज्येष्ठपुत्र्याः लक्ष्म्याः विवाहः जातः आसीत्। 'सहस्रं रूप्यकाणि स्वीकृत्य एव भवत्या गृहम् आगन्तव्यम्, नान्यथा' इति कठोरम् उक्त्वा लक्ष्मीं मातृगृहं प्रेषितवन्तः आसन् लक्ष्म्याः पतिगृहस्य सदस्याः।

लक्ष्म्याः पिता लक्ष्मणः इदानीं किङ्कर्तव्यतामूढः आसीत्। लक्ष्म्याः भगिन्योः विवाहः कथं निर्वर्तनीयः इति समस्या तु बहोः कालतः आसीत् एव। लक्ष्म्याः विवाहार्थं यत् ऋणं कृतं तत् इतोऽपि न प्रत्यर्पितम् आसीत्। एवं स्थिते लक्ष्म्यै दातुं सहस्रं रूप्यकाणि कुतः आनयेत् सः? अन्ते सः निश्चितवान् यत् एकमात्रसम्पत्तिं गृहं विक्रीय लक्ष्म्याः पतिगृहीयाणाम् अपेक्षा पूरणीया इति।

पितुः चिन्तनं ज्ञात्वा उक्तवती लक्ष्मीः— "तात! मम पतिगृहस्य सदस्यानां धनपिपासा कदापि शान्ता न भविष्यति। एतत् गृहम् अपि इदानीं यदि विक्रीयेत तर्हि मम भगिन्योः विवाहार्थं किं वा कुर्यात् भवान्? मत्पतिगृहसम्पर्कं विस्मराम तावत्। अहम् अपि भवद्भिः सह वासं करिष्यामि" इति।

"वत्से! एवं मा कथयतु कृपया। यदि भवती पतिगृहवासं त्यजेत् तर्हि मम अपख्यातिः स्यात्। पतिगृहे एतादृशाः लघुक्लेशाः सहजाः। एतदर्थं पतिगृहस्य त्यागः किम् उचितः? वत्से! यदि मयि



भवत्याः प्रीतिः आदरः च स्यात् तर्हि मया यथा उच्यते तथा करणीयं भवत्या। श्वः अहं गृहं विक्रीय भवत्यै सहस्रं रूप्यकाणि दास्यामि। तत् धनं स्वीकृत्य भवती पतिगृहं गत्वा सुखेन जीवतु। अत्र अग्रे का गतिः इति तु अहं चिन्तयिष्यामि। भवती निश्चिन्ता भवतु'' इति।

लक्ष्मीः मौनं स्थितवती। रात्रौ तया किञ्चिदपि निद्रा न प्राप्ता। 'पितुः भगिन्योः च एकमात्राश्रयः गृहं मत्कारणतः विक्रीयते खलु?' इति खेदम् अनुभवति सा। बहुधा चिन्तयित्वा सा निर्णीतवती यत् अहम् एव यदि आत्महत्यया इहलोकव्यापारं समापयेयं तर्हि समस्या परिहृता भवेत् इति।

गृहस्य पृष्ठतः कश्चन कूपः आसीत्। 'कूपे पतनीयम्' इति उद्देशेन लक्ष्मीः विनाशब्दं शय्यातः उत्थाय कूपसमीपं गतवती। तदा वृक्षस्य उपरि उपविष्टा लघुपिशाची ताम् अपश्यत्। तां भाययितुम् इच्छन्ती सा वृक्षात् अवतीर्य लक्ष्म्याः पुरतः अतिष्ठत्।

एतत् दृष्ट्वा नितरां भीता लक्ष्मीः चीत्कारं कुर्वती गृहस्य अन्तः आगतवती। गृहसदस्याः सर्वे जागरिताः। भीत्या कम्पमाना लक्ष्मीः अवदत्– ''गृहस्य पृष्ठतः पिशाची!'' इति।

''अस्माकं गृहस्य पृष्ठतः पिशाची अस्ति? कथम् एतत्? अहं दृष्ट्वा आगच्छामि तावत्'' इति उक्त्वा निम्बवृक्षस्य समीपं गतवान् लक्ष्मणः।

लक्ष्मणे अपि भीतिं जनयितुम् इच्छन्ती पिशाची तत्समीपम् आगत्य नृत्यम् अकरोत्। किन्तु पिशाचीनृत्यं दृष्ट्वा लक्ष्मणः किञ्चिदपि न भीतः। सः पिशाचीम् अपृच्छत्– ''अये, एकाकिनी किमर्थम् अस्ति भवती? किं भवत्याः समयः न गच्छति?'' इति।

लक्ष्मणस्य धैर्यं दृष्ट्वा पिशाची आश्चर्यचकिता। स्वपरिवारे यत् प्रवृत्तं तत् उक्तवती सा। तदा लक्ष्मणः अवदत्– ''अये पिशाचि! सर्वथा बालत्वं भवत्याः। त्वरया मातुः समीपं गच्छतु। भवतीं स्मरन्ती भवत्याः माता, न जाने, कियत् अश्रूणि स्रावितवती इति। मातुः प्रीतिः जीवने सर्वथा

वीरेन्द्रनाथः प्रतिवेशिराजाय सुरेन्द्रनाथाय भगिनीं दत्त्वा विवाहं निर्वर्तितवान्। स्वयं च धर्ममार्गेण राज्यं परिपालितवान्। ऐश्वर्या-सुरेन्द्रनाथयोः एकः पुत्रः जातः। राजा वीरेन्द्रनाथः तदा तदा तीर्थयात्रार्थं गच्छति स्म। तत्समये सुरेन्द्रनाथः तस्य सहोदरः जितेन्द्रनाथः च महिमपुर्याः शासनभारं वहतः स्म।

एवं कदाचित् वीरेन्द्रनाथः तीर्थयात्रार्थं गतः आसीत्। तदा पाटलीपुरस्य राजा महिमपुरस्य उपरि आक्रमणं कृतवान्। युद्धं प्रवृत्तम्। युद्धे सुरेन्द्रनाथः मरणं प्राप्तवान्। सुरेन्द्रनाथस्य पत्नी ऐश्वर्या, तस्याः पुत्रः, जितेन्द्रनाथः च कथमपि सजीवं निर्गत्य राज्यात् पलायनं कृतवन्तः। यदा वीरेन्द्रनाथः तीर्थयात्रां समाप्य प्रत्यागतः तदा शत्रवः तं बद्ध्वा कारागारे स्थापितवन्तः। भगिन्याः दुर्गतिं स्मरन् वीरेन्द्रनाथः महत् दुःखम् अनुभूतवान्। तेन एव महता दुःखेन कारागारे एव सः मरणं प्राप्तवान्।

जितेन्द्रनाथः भ्रातृजायया, तस्याः पुत्रेण च सह सर्वत्र अटन् अन्ते वीरगिरिराज्यं प्राप्तवान्। तत्र कष्टम् अनुभवन् सः कानिचन दिनानि यापितवान्। जितेन्द्रनाथेन तत्र काचित् परिणीता। दौर्भाग्यवशात् अल्पे एव काले सा अकालमृत्युं प्राप्तवती। एतेन विरक्तिं प्राप्य जितेन्द्रनाथः देशाटनं कृतवान्। अन्ते अरण्ये कुटीरं निर्माय भगवतः ध्यानं कुर्वन् संन्यासजीवनम् आश्रितवान्। ततः सः अग्रजपुत्रस्य भ्रातृजायायाः च विषये



किमपि न चिन्तितवान् एव। महिमपुर्याः सिंहासनस्य विषये अपि तेन चिन्तनं न कृतम्'' इत्येव कथयतः मुनेः नेत्राभ्याम् अश्रुधारा निर्गता।

''ऐश्वर्यायाः पुत्रस्य नाम किम् इति भवता न उक्तम् एव'' इति उक्तवती युवराज्ञी।

''महेन्द्रनाथः इति। स च इदानीम् अत्रैव अस्ति'' इति उक्तवान् मुनिः।

'एषः मुनिः न अन्यः, अपि तु पितृव्यः जितेन्द्रनाथः एव' इति ज्ञातवतः महेन्द्रनाथस्य महत् आश्चर्यम् आनन्दः च। सः महत्या आत्मीयतया पितृव्यम् आलिङ्गितवान्।

''मया राजधान्यां मदीयं कर्तव्यद्वयं निर्वर्तनीयम् अस्ति। एषः महेन्द्रनाथः कः इति राजा निवेदनीयः इति तु एकं कर्तव्यम्। भ्रातृजाया क्षमां प्रार्थनीया इति तु द्वितीयं कर्तव्यम्। कुत्र गम्यते इति अविसूच्य जीवनव्यवस्थां कामपि अकृत्वा गच्छता मया अपराधः तु कृतः एव। अतः भ्रातृजायां क्षमां सम्प्रार्थ्य पुनः अत्र आगत्य शिष्टं जीवनं शान्त्या यापयिष्यामि'' इति उक्तवान् मुनिः।

महेन्द्रनाथः विद्यावती च किमपि वक्तुम् उद्युक्तौ। तयोः कथनं निवारयन् पुनः उक्तवान् मुनिः– ''भवन्तौ आश्रमवासिनौ इव वेषं धरताम्। अनन्तरं त्रयः अपि मिलित्वा राजधानीं गच्छाव। इदानीं प्रस्थितं चेत् सायं सूर्यास्तसमये राजधानीं प्राप्तुं शक्नुयाव। ततः साक्षात् राजप्रासादं गच्छाव'' इति।

तदा युवराज्ञी उक्तवती– ''महात्मन्! राजप्रासादप्राप्तेः स्मरणमात्रेण अहम् आनन्दसागरे निमग्ना अस्मि'' इति। अनन्तरं सा आभरणादीनि अपनीय आश्रमवासिवेषं धृतवती। सा इदानीं मुनिपुत्री इव दृश्यते स्म। महेन्द्रनाथः मुनिकुमारस्य वेषं धृतवान्।

ततः त्रयः अपि मिलित्वा वीरगिरिम् उद्दिश्य प्रस्थितवन्तः।

–(अनुवर्तते)






महिरावणस्य संहारः जातः इति सुवर्चलाद्वारा ज्ञातवती चन्द्रसेना। 'मत्स्यवल्लभः पाताललङ्कायाः राजा जातः अस्ति' इत्यपि वार्ता ज्ञाता तया।

महिरावणस्य ग्रहणात् मुक्तिः प्राप्ता इत्यतः नितरां सन्तुष्टा अस्ति चन्द्रसेना। तां दृष्ट्वा उक्तवती सुवर्चला– "आर्ये, भाग्यवती भवती। महिरावणस्य संहारं कृत्वा प्रभुः श्रीरामचन्द्रः भवत्याः समीपम् एव आगच्छन् अस्ति" इति।

एषा वार्ता तु अमृतपानतुल्या आसीत्। सन्तोषभरम् आत्मनि धर्तुम् अशक्नुवती चन्द्रसेना नृत्यन्ती इव ततः निर्गत्य रामस्य स्वागतार्थं सन्नाहं कर्तुम् उद्युक्ता अभवत्। प्रथमं सा स्वमन्दिरस्य पुरतः तोरणं बद्धवती। हंसतूलिकातल्पं पुष्पैः अलङ्कृतवती। तल्पे, प्रकोष्ठे, इतरत्र च सुगन्धजलस्य सेचनं कृतवती। ततः चन्दनताम्बूलादिकम् अभिषेकजलं च सज्जीकृत्य स्थापितवती।

अनन्तरं सा सुवर्णस्थालिकायां पुष्पेण सुगन्धजलेन च युक्तं कलशं स्थापयित्वा हस्तेन धृत्वा रामस्य आगमनं प्रतीक्षमाणा द्वारसमीपे स्थितवती।

द्वित्रनिमेषाभ्यन्तरे हनूमान् दृष्टिगोचरः जातः। तम् अनुसरन् रामः आगच्छन् आसीत्। रामस्य दर्शनात् एव आनन्दतुन्दिला चन्द्रसेना करौ योजयित्वा नेत्रे निमील्य निश्चलतया स्थितवती।

प्रकोष्ठस्य अन्तः आगतः हनूमान् चन्द्रसेनां नमस्कृत्य उक्तवान्– "आर्ये, पूर्वं



यत् वचनं दत्तं तदनुगुणं श्रीरामचन्द्रम् आनीतवान् अस्मि, पश्यतु'' इति।

एतानि वचनानि श्रुत्वा चन्द्रसेना नेत्रे उन्मीलितवती। तस्याः पुरतः शान्तः गम्भीरः च श्रीरामः स्थितः आसीत्। सा झटिति अग्रे पदानि स्थापयित्वा रामस्य पादौ सुवर्णस्थालिकायां निक्षिप्य सुगन्धजलेन क्षालितवती। ततः आत्मनः उपरि तीर्थोदकस्य प्रोक्षणं कृतवती च। रामं पुष्पैः अर्चित्वा नीराजनं कृतवती सा।

आनन्दपरवशा सा वक्तुम् इच्छन्ती अपि किमपि वक्तुं न शक्नोति स्म। अतः स्वागतक्रियादिकं मौनम् एव प्रवृत्तम्। अनन्तरं सा रामं हंसतूलिकातल्पस्य समीपं नीतवती।

तल्पस्य उपरि स्थापितम् एकं हारम् उन्नीय रामस्य कण्ठे स्थापयितुम् उद्युक्ता अभवत् चन्द्रसेना। तदा एव रामः तल्पस्य उपरि उपवेष्टुम् उद्युक्तः। तावता तल्पः भग्नः सन् अधः अपतत्। माला चन्द्रसेनायाः हस्ते एव अतिष्ठत्।

चन्द्रसेना पुनरपि हारं रामस्य कण्ठे स्थापयितुं यदा उद्युक्ता तदा रामः तां निवारयन् उक्तवान्– ''चन्द्रसेने! दृष्टं खलु सर्वम् अपि। इदानीं शकुनम् अशुभं सूचयति'' इति।

अनन्तरक्षणे एव चन्द्रसेनायाः हस्ते स्थिता माला रामस्य पादयोः उपरि पतिता। किं प्रवृत्तम् इति इदानीं स्पष्टम् अवगच्छन्ती चन्द्रसेना दीर्घं निःश्वस्य भग्नं तल्पं परीक्षादृष्ट्या दृष्टवती।

हनूमान् सूक्ष्मरूपं धृत्वा गत्वा तल्पं पातितवान् आसीत्। एतत् चन्द्रसेनया लक्षितम् एव।

हनूमान् सूक्ष्मरूपं परित्यज्य वास्तविकं रूपं धृत्वा चन्द्रसेनायाः पुरतः स्थित्वा अवनम्य क्षमायाचनपूर्वकम् उक्तवान्– ''अम्ब! क्षन्तव्यः अहम्। यत् वचनं दत्तं तस्य अनुगुणम् अहं रामभद्रम् अत्र आनीतवान्। किन्तु एषः श्रीरामचन्द्रः एकपत्नीव्रतस्थः इति तु भवती अपि जानाति एव। फलापेक्षां विना श्रीरामस्य सेवा उचिता इति अहं भावयामि'' इति।

चन्द्रसेना प्रतिवचनं किमपि न उक्तवती। सा निर्निमेषदृष्ट्या श्रीरामं दृष्टवती। क्षणाभ्यन्तरे एव तस्याः पुरतः भगवतः विष्णोः रूपं दृष्टिगोचरं जातम्। भगवान् विष्णुः अवदत्– "भद्रे, चन्द्रसेने! अहम् एतस्मिन् रामावतारे एकपत्नीव्रती अस्मि। अग्रिमे कृष्णावतारे मम अष्ट पत्न्यः भविष्यन्ति। तदा भवती सत्यभामानाम्ना मम प्रिया पत्नी भवतु" इति।

तत्समये चन्द्रसेनया अनुभूतं यत् विष्णोः तेजः स्वस्मिन् प्रविष्टः इति, आत्मा च ज्योतीरूपेण विष्णोः तेजसा मिलितः इति च। ज्योतीरूपः स्वप्रकाशः विष्णोः तेजः च सम्भूय श्रीरामे विलीने अभवताम् इत्यपि दृष्टं तया।

हनूमान् अपि अर्धनिमीलितनेत्रः सन् भक्त्या एतत्सर्वं दृष्टवान्। केषाञ्चित् क्षणानाम् अनन्तरं सः नेत्रे पूर्णम् उन्मील्य दृष्टवान्। तदा तस्य पुरतः हसन्मुखः श्रीरामः स्थितः आसीत्। क्षणमात्रेण यत् प्रवृत्तं तत्सर्वं तेन विस्मृतम्। महिरावणसंहारः केवलं स्मर्यते स्म तेन।

अत्रान्तरे पाताललङ्कायाः राजा मत्स्यवल्लभः तत्र आगतः। सः रामं हनूमन्तं च पुष्पैः पूजयित्वा तयोः आशीर्वादं प्राप्तवान्। अनन्तरं रामः लक्ष्मणेन हनूमता च सह पातालङ्कातः प्रस्थितवान्। तेषां प्रेषणार्थं पातालङ्कायाः सर्वाः प्रजाः



सम्मिलिताः। हार्दभावेन प्रजाः रामादीन् प्रेषितवत्यः।

हनूमान् रामलक्ष्मणौ भुजयोः उपरि उपवेश्य पातालङ्कातः बहिः आगत्य आकाशमार्गम् आश्रितवान्। यावत् ते दृष्टिपथे आसन् तावत् हस्तं चालयन् स्थितवान् आसीत् मत्स्यवल्लभः।

हनूमान् यदा रावणलङ्काम् उद्दिश्य गच्छन् आसीत् तदा सेनासमेताः वानरप्रमुखाः रामलक्ष्मणहनूमताम् अनागमनं दृष्ट्वा उद्विग्नाः खिन्नाः च आसन्। सर्वे आकाशमार्गं निर्निमेषं यद्यपि पश्यन्ति स्म तथापि रामादयः दृष्टिगोचराः भवेयुः इत्यत्र तेषां विश्वासः न आसीत्। किन्तु जाम्बवान् तु



धैर्यच्युतः न आसीत्। सः सान्त्वनवचनैः सर्वेषु धैर्यं पूरयन् आसीत्।

"हनूमान् असाध्यम् इति पदम् एव न जानाति। महान्तम् अपि विघ्नं दूरीकृत्य जयं प्राप्य आगमिष्यति सः। विघ्नाः अधिकाः स्युः। अतः विलम्बः जायमानः अस्ति। तथापि हनूमान् रामलक्ष्मणाभ्यां सह सकुशलं प्रत्यागमिष्यति इत्यत्र सन्देहः एव मास्तु भवताम्" इति पुनः पुनः वदन् आसीत् जाम्बवान्।

लङ्कानगरे तु राक्षसाः आनन्देन नृत्यन्तः कोलाहलं कुर्वन्तः आसन्। केचन स्वेच्छया मांसादिकं खादन्तः सुरां पीत्वा नृत्ये मग्नाः आसन्। अन्ये केचन मदोन्मत्ताः सन्तः गीतं गायन्तः इतस्ततः भ्रमन्तः आसन्।

रावणः महता उत्साहेन महिरावणस्य प्रतीक्षां कुर्वन् आसीत्। 'संहृतयोः रामलक्ष्मणयोः शिरः आनेष्यति महिरावणः' इति रावणस्य चिन्तनम् आसीत्। 'रामलक्ष्मणयोः शिरः सुवर्णस्थालिकायां संस्थाप्य नीत्वा सीतायै दातव्यम्' इति सः चिन्तयन् आसीत्। तदर्थं सर्वा व्यवस्था अपि कृता आसीत् तेन।

महान् समयः अतीतः चेदपि महिरावणस्य दर्शनं तु नास्ति एव। रावणः प्रासादात् बहिः आगतवान्। दुर्गस्य उपरि स्थितं रक्षणगोपुरं प्राप्य दूरात् दृश्यमानां वानरसेनां दृष्ट्वा तृप्त्या हसितवान्।

वानराः सर्वे दुःखसागरे निमग्नाः आसन्। ते शिरः अवनमय्य उपविष्टाः आसन्। तेषां समीपे खिन्नः विभीषणः अपि उपविष्टः आसीत्।

विभीषणं दूरात् एव अभिज्ञाय रावणः अत्युच्चस्वरेण उक्तवान्– "अये विभीषण! अहो अज्ञानं भवतः! इतोऽपि प्रतीक्षा किमर्थं क्रियते? एतावता पातालङ्कायां रामलक्ष्मणौ कालिकादेव्यैः बलिरूपेण समर्पितौ एव। तयोः शिरः अचिरात् एव मत्समीपम् आनीयते। शिरसः मांसं विशेषरुचियुक्तं भवति इति जानीयात् खलु भवान्? तस्य शिरोमांसस्य खादनार्थं वा झटिति लङ्काम् आगच्छतु भवान्। अत्र

आगन्तुं भीतिः सङ्कोचः वा मास्तु। भवता अनुचितं किञ्चित् कृतं स्यात्। तथापि भवान् मम सहोदरः एव इति अहं स्मरामि। औदार्येण सर्वं क्षान्तवान् अस्मि। अभयम् अपि दीयते मया। अग्रे भवान् एव लङ्कायाः युवराजः भविष्यति। विनयेन तदा व्यवहरतु। इदानीम् अविलम्बेन लङ्कां प्रति आगच्छतु" इति।

रावणस्य स्वरः यदा कर्णयोः उपरि पतितः तदा विभीषणः हस्ताभ्यां कर्णौ पिधाय स्थितवान्। तस्य मुखात् अश्रूणि निर्गतानि। विभीषणस्य मुखे दुःखाश्रूणि दृष्टवतः सुग्रीवस्य दुःखम् उद्गतम्। तयोः दुःखं दृष्टवतां वानराणां दुःखोद्गतः कोलाहलः तत्र सर्वत्र व्याप्तः।



वानराणां दयनीयां स्थितिं दृष्ट्वा रावणः उच्चैः अट्टहासं कृतवान्। दुर्गभित्तिसमीपे गच्छन्तीः राक्षसीः आहूय आज्ञापितवान् रावणः– "अचिरात् एव रामलक्ष्मणयोः शिरः उपहाररूपेण आनीयते इति सीतां वदन्तु भवत्यः। तयोः शरीरं तु पाताललङ्कायाः राक्षसाः आनन्देन खादितवन्तः स्युः। अतः शिरोमात्रम् अत्र आनीयते। सीताम् एतां वार्तां निवेद्य– 'रामलक्ष्मणयोः शिरः स्वागतीकर्तुं सिद्धया भवितव्यम्' इति सूचयन्तु" इति।

रावणस्य आनन्दातिशययुक्ते व्यवहारे मतिभ्रमस्य अंशः अपि युक्तः अस्ति इति राक्षसीनां मनसि अभासत। अतः क्षणकालं ताः मौनं स्थितवत्यः। अनन्तरं रावणस्य आज्ञां तिरस्कर्तुम् अशक्नुवत्यः ताः रावणं विनयेन नमस्कृत्य ततः वेगेन गतवत्यः।

रावणः दुर्गभित्तितः निर्गत्य स्वभवनं गतवान्। सागरस्य दिशि स्थितस्य वातायनस्य पार्श्वे उपविश्य आकाशं पश्यन् स्थितवान्। अचिरात् एव आकाशे अस्पष्टा काचित् आकृतिः दृष्टा तेन।

सः झटिति आसनात् उत्थाय हस्ततालपूर्वकं भटान् आज्ञापितवान्– "अहो, आगच्छन् अस्ति महिरावणः! रामलक्ष्मणौ बलिरूपेण देव्यै समर्प्य तयोः शिरः आनयन् अस्ति सः। तयोः शिरसः स्थापनार्थं सुवर्णस्थालिका सिद्धा भवतु।



सुवर्णस्थालिकां त्वरया आनयन्तु अत्र। हुँ विलम्बः मास्तु'' इति।

सागरस्य दिशि आकाशमार्गं पश्यन् स्थितः जाम्बवान् अस्पष्टां लघ्वाकृतिं दृष्टवान्। दृष्टिपाटवात् सः अभिज्ञातवान् यत् कः आगच्छन् अस्ति इति। विकसितवदनः सः सन्तोषेण अङ्गदं दृष्टवान्। अङ्गदः तु महता आश्चर्येण जाम्बवन्तं दृष्टवान्।

जाम्बवान् हस्तौ उन्नीय वानरान् उक्तवान्– ''तत्र पश्यन्तु भवन्तः! हनूमान् आगच्छन् अस्ति। भो भो, वानराः! अलं चिन्तया। तत्र पश्यन्तु आगच्छन्तं हनूमन्तम्'' इति।

तदा अङ्गदः महता उत्साहेन विजयध्वनिं कुर्वन् उच्चस्वरेण उक्तवान्– ''अस्माकं हनूमान् आगच्छन् अस्ति! तस्य स्कन्धयोः रामलक्ष्मणौ दृश्येते! तेषां स्वागतं योग्येन क्रमेण करवाम वयम्'' इति।

तावता रामलक्ष्मणाभ्यां सहितः हनूमान् सर्वैः वानरैः स्फुटं दृष्टः। तदा तत्र उत्पन्नम् आनन्दजनितं कोलाहलं किमिति वर्णयाम वयम्? तैः कृतैः जयजयकारैः आकाशः व्याप्तः अभवत्। एतावत्पर्यन्तं लङ्कायां यः विजयध्वनिः आसीत् सः झटिति स्तब्धः जातः।

वानरैः क्रियमाणं विजयध्वनिं कोलाहलं च श्रुत्वा आश्चर्यम् अनुभवन् रावणः स्वभवनस्य वातायनस्य पार्श्वे शिला इव निश्चलः स्थितः अस्ति। रामलक्ष्मणयोः कोऽपि अपायः न जातः, तौ सकुशलं स्तः इति ज्ञातवान् रावणः। 'एवं तर्हि अहिरावण-महिरावणयोः का कथा? रामलक्ष्मणौ तयोः वधं तु न कृतवन्तौ स्यातां खलु?' इति चिन्तयन् स्थितवान् रावणः।

तावता कश्चन गुप्तचरः राक्षसः तत्र उपस्थितः। वानराणां वार्तालापतः यत् ज्ञातं तत् रावणं निवेदितवान् सः। तदा रावणः ज्ञातवान् यत् पाताललङ्कायां किं प्रवृत्तम् इति। भयेन सः कम्पितः जातः। चीत्कारः तस्य मुखात् निर्गतः। सः मूर्च्छां गतः सन् अधः अपतत्।

अल्पे एव काले सः सचेतनः जातः। इदानीं

तस्य अन्तरङ्गे क्रोधः द्वेषः च ज्वलतः। सः मुष्टिं बद्ध्वा दन्तैः कटकटध्वनिं कुर्वन् उद्वेगेन उक्तवान्– "मम प्रियपुत्रम् इन्द्रजितं मारितवान् सः लक्ष्मणः कुत्र? सः यत्रकुत्रचित् वा भवेत् नाम, तस्य संहारम् अहम् अवश्यं करिष्यामि। सः भीरुः इव वानरसेनायाः मध्ये स्थितः अस्ति। तम् अत्र आगन्तुं वदन्तु। क्षणमात्रेण तस्य प्राणान् वायौ लीनान् करिष्यामि अहम्" इति।

रावणस्य दयनीयां दशां दृष्टवत्याः मन्दोदर्याः नेत्राभ्याम् अश्रूणि आगतानि। रावणः तां दृष्ट्वा अपि अपश्यन् इव पुनः उक्तवान्– "तस्य लक्ष्मणस्य मारणार्थं मम कस्यापि साहाय्यं न आवश्यकम्। अहम् एकाकी एव गत्वा रामस्य लक्ष्मणस्य च संहारं करिष्यामि। अनन्तरं तयोः शिरः सीतायाः समीपं प्रेषयिष्यामि। सः महिरावणः मम प्रयत्ने विघ्नम् उत्पादयन् मयि आशां जागरय्य मम समयं व्यर्थं कृतवान्। धिक् महिरावणम्। सः सर्वथा भीरुः। तस्य सहोदरः अपि तादृशः एव। उभौ अपि तौ अप्रयोजकौ। अतः एव रामः तौ लीलया मारयितुं शक्तवान्। इतः परं महिरावणस्य विषये चिन्तनेन किम्? मम पुत्रम् इन्द्रजितं मारितवन्तं तं दुष्टं लक्ष्मणं सर्वप्रथमं यमसदनं प्रेषयिष्यामि अहम्। सः दुष्टः लक्ष्मणः कुत्र? कुत्र निलीय स्थितः अस्ति सः?" इति। रावणस्य व्यवहारः उन्मत्तस्य इव एव आसीत्।

वानरसेनया युद्धार्थं सन्नाहः आरब्धः। वानरैः उच्चैः शङ्खनादः कृतः। युद्धाह्वानसूचकं तं ध्वनिं श्रुतवतः रावणस्य नेत्रे तप्ताङ्गारे जाते। क्रोधकारणतः तदीयं समग्रं शरीरं रक्तं जातम्। तस्य मुखे महती उग्रता दृश्यते स्म।

रावणः बाणवारकं कवचं धृत्वा धनुर्बाणादीन् स्वीकृत्य उच्चध्वनिना पृष्टवान्– "सः भीरुः दुष्टः लक्ष्मणः कुत्र?" इति। ततः वेगेन भवनात् निर्गत्य वानरसेनाम् उद्दिश्य प्रस्थितवान् सः।






# मन्त्रशक्तयः

प्राचीने काले नेपालदेशे बहवः विविधाभिः मन्त्रशक्तिभिः युक्ताः भवन्ति स्म। कस्मिंश्चित् ग्रामे निवसन् वर्धकः अपि एतादृशशक्तिमान् आसीत्। सः पशुचारणवृत्त्या जीवति स्म। कदाचित् पशुचारणार्थं गतः सः पिपासां प्राप्य जलपानार्थं कूपस्य समीपं गतवान्। जलपानार्थम् आगताः केचन तत्रैव कूपसमीपे उपविष्टाः आसन्। वर्धकः तेषां समीपे उपविष्टवान्।

तदा कश्चन ग्रामीणाः तं पृष्टवान्– "किं रे वर्धक! भवान् अत्र सुखेन उपविष्टवान् खलु? तत्र पशूनां रक्षणं कः करोति?" इति।

"अहं तत्र नास्मि चेदपि पशवः ततः कुत्रापि न गच्छन्ति" इति उक्तवान् वर्धकः।

"कुत्रापि न गन्तव्यम् इति भवतः वचनं पालयन्तः सर्वे पशवः एकत्र एव तिष्ठन्ति। एवं ननु?" इति उपहासपूर्वकम् उक्तवान् सः ग्रामीणः। तदा तत्र उपस्थिताः अन्ये अपि हसितवन्तः।

"किमर्थम् हासः? अहं यत्रकुत्रापि भवेयं नाम। किन्तु पशवः मम वचनं पालयन्ति इत्यत्र नास्ति सन्देहः" इति उक्तवान् वर्धकः।

"तर्हि अत्र स्थित्वैव वृषभौ आनयतु। पश्याम तावत्" इति उक्तवान् ज्येष्ठः ग्रामीणः।

"अस्तु तावत्" इति उक्तवान् वर्धकः। ततः अल्पे एव काले उभौ वृषभौ धावन्तौ तत्र आगतवन्तौ, वर्धकस्य पुरतः विनयेन स्थितवन्तौ च।

"इदानीं भवन्तौ गच्छताम्। अन्यैः पशुभिः सह तिष्ठन्तौ तृणं चरताम्" इति हसन् उक्तवान् वर्धकः। वृषभौ ततः

"नेपालदेशीया जानपदकथा"



प्रतिगतवन्तौ।

"दृष्टं खलु? मम सर्वे पशवः मदीयं वचनं पालयन्ति" इति साभिमानम् उक्तवान् वर्धकः।

"एतौ वृषभौ पशुगणसमीपम् एव गच्छतः, उत अन्यस्य कस्यचित् क्षेत्रं प्रविशतः इति कः जानाति?" इति उक्तवान् अपरः ग्रामीणः।

"साक्षात् गणसमीपम् एव गच्छतः तौ, न अन्यत्र" इति उक्तवान् वर्धकः।

वर्धकस्य वचनं सत्यं वा न वा इति परीक्षितुम् इच्छन्तः केचन तौ वृषभौ अनुसरन्तः गतवन्तः। वृषभौ तु साक्षात् गणसमीपं गत्वा अन्ये पशवः इव तृणचरणे मग्नौ जातौ।

पुनः कदाचित् अन्या एतादृशी एव घटना घटिता। तद्ग्रामीणः धनिकः वृषभं क्रेतुम् इच्छन् पशुमेलां गतवान्। आत्मना सह वर्धकम् अपि नीतवान् आसीत् सः। मेलायां कश्चन वृषभः क्रीतः। धनिकः वृषभं वर्धकाधीनं कृत्वा– "एतं वृषभं भवान् गृहं नयतु। अहं नगरं गत्वा मदीयं कार्यं समाप्य आगमिष्यामि" इति उक्त्वा शकटम् आरुह्य नगरं प्रति गतवान्।

तदा तु अपराह्णः आसीत्। 'धनिकः तु रात्रिसमये गृहं प्रत्यागच्छेत्। मेलायाम् इतः ततः अटित्वा सायं गृहं प्राप्नोमि चेत् न काऽपि आपत्तिः' इति चिन्तयित्वा वर्धकः वृषभम् आदिष्टवान्– "वृषभ! भवान् धनिकगृहं गच्छतु। अहम् अनन्तरम् आगमिष्यामि" इति।

वृषभः ततः निर्गतः। वर्धकः सायङ्कालपर्यन्तं मेलायाम् इतस्ततः अटन् परिचितैः सह वार्तालापं कुर्वन् समयं यापितवान्। यदा सूर्यास्तः जातः तदा सः ग्रामं प्रति प्रस्थितवान्। यदा धनिकस्य गृहं प्राप्तं तदा तेन दृष्टं यत् वृषभः तत्र आगतः सन् अपि गोष्ठस्य अन्तः न गतः इति। बहिः एव शयनं कृतवान् आसीत् सः। वर्धकः वृषभं गोष्ठस्य अन्तः नीत्वा बद्धवान्, तस्य पुरतः तृणादिकं स्थापितवान् च।

स च वृषभः तदनन्तरदिनेषु अपि वर्धकस्य

वचनं न पालयति स्म। वर्धकं शृङ्गाभ्यां तुम्फितु प्रयत्नं करोति स्म कदाचित्। सर्वं दृष्ट्वा वर्धकः ज्ञातवान् यत् अन्यस्य कस्यचित् मन्त्रेण प्रभावितः सन् एषः एवं व्यवहरन् अस्ति इति। अतः सः कण्टकसस्यस्य शाखाः सङ्गृह्य सम्मार्जनीरूपेण बद्ध्वा गोष्ठस्य सम्मार्जनम् आरब्धवान् ।

तावता गोष्ठरक्षकः कश्चन कर्मकरः– "स्थगयतु भोः, स्थगयतु" इति उच्चैः आक्रोशनं कुर्वन् वर्धकस्य समीपं धावन् आगतवान्। तस्य पृष्ठभागतः रक्तं स्रवति स्म। वर्धकः गोष्ठस्य सम्मार्जनं करोति स्म. किन्तु कण्टकानि गोष्ठरक्षकं पीडयन्ति स्म।

"अये, मम मन्त्रशक्तिं निरोद्धुं प्रयासः वा भवतः? इदानीं ज्ञातं खलु मम सामर्थ्यं कियत् इति? इतः परं यदि भवान् एतादृशं कार्यं कुर्यात् तर्हि भवान् प्राणैः वियुक्तः भवेत्" इति उक्त्वा वर्धकः तं गोष्ठरक्षकं प्रेषितवान्।

सः गोष्ठरक्षकः अपि काश्चन मन्त्रशक्तीः वशीकृतवान् आसीत्। किन्तु वर्धकस्य यावत् सामर्थ्यं तावत् तस्य न आसीत्। ततः आरभ्य वर्धकम् आदरेण दृष्टवान् सः।

कदाचित् केचन ग्रामीणाः क्षेत्रे वर्धितं धान्यगोणीः शकटेषु आरोप्य विक्रयणार्थं नगरं गच्छन्तः आसन्। तेषु वर्धकः अपि अन्यतमः आसीत्। मध्याह्नसमये कासारसमीपे शकटानि स्थगयित्वा



उपविष्टवन्तः ते। वृषभवाहकेभ्यः वृषभेभ्यः तृणानि दत्तानि अपि। अनन्तरं ते भोजनं समाप्य वार्तालापे मग्नाः जाताः।

तदभ्यन्तरे कश्चन शाकटिकः उक्तवान्– "पश्यतु, भोः, सः शुनकः कथं धावति इति?" इति।

सर्वे आश्चर्येण शुनकं दृष्टवन्तः। स च शुनकः इतस्ततः अपश्यन् अग्रे धावन् आसीत्। वर्धकः क्षणकालं विचिन्त्य उक्तवान्– "एषः शुनकः स्वबुद्ध्या एवं गच्छन् नास्ति। केनचित् प्रेरितः अस्ति सः" इति।

"कः किमर्थं शुनकं प्रेरयेत्?" इति कुतूहलेन पृष्टवान् कश्चित्।

"तत्तु इदानीं ज्ञातव्यम् अस्माभिः" इति शान्तस्वरेण उक्तवान् वर्धकः।

ततः वर्धकः किं कृतवान् इति न ज्ञायते, शुनकस्य गमनं स्थगितम्। सः क्षणकालम् इतस्ततः दृष्ट्वा परिवृत्य स्वग्रामं प्रति अधावत्। सर्वे शाकटिकाः आश्चर्यं प्राप्तवन्तः।

शुनकः यस्यां दिशि गतः ततः अर्धघण्टाभ्यन्तरे कश्चित् अश्वम् आरुह्य आगतवान्। एतान् कोपेन उक्तवान् च– "मम शुनकस्य व्यवहारं किमर्थम् अवरुद्धवन्तः भवन्तः? स्वकार्यं कुर्वन्तु प्रथमम्। सम्बन्धरहिते व्यवहारे प्रवर्तनं न शोभते" इति।

"भवतः शुनकं वयं तु न अवरुद्धवन्तः" इति उक्तवान् वर्धकः।

"अहो, एवं तर्हि औद्धत्यं प्रदर्शितवान् भवान् एव" इति उक्त्वा वर्धकं ताडयितुम् उद्युक्तः सः। तावता सर्वे शाकटिकाः सम्भूय तं गृहीतवन्तः। अनन्तरं विविधैः प्रश्नैः, ताडनादिभीतिदर्शनेन च तस्य मुखात् वस्तुस्थितिः निस्सारिता वर्धकेन।

स च कश्चन पशुवैद्यः आसीत्। समीपे कुत्रापि अन्यः पशुवैद्यः न आसीत्। एषः पशुवैद्यः मन्त्रशक्तिम् अपि जानाति स्म। मन्त्रशक्त्या एषः स्वशुनकं कुत्रापि प्रेषयति स्म। शुनकः कमपि पशुं दशति स्म। उन्मत्तशुनकः कोऽपि दष्टवान् इति चिन्तयित्वा जनाः चिकित्सार्थम् एतस्य वैद्यस्य समीपम् एव आगच्छन्ति स्म। तदा एषाः सामान्यं किमपि औषधं दत्त्वा प्रभूतं शुल्कं स्वीकरोति स्म। 'शुनकदंशनार्थम् एषः अत्युत्तमम् औषधं ददाति" इति ख्यातिः प्राप्ता आसीत् एतेन। किन्तु वस्तुस्थितिः एषा यत् एतस्य शुनकः उन्मत्तः न इत्यतः शुनकदंशनात् मरणस्य प्रसक्तिः एव न आसीत्।

वर्धकस्य कारणतः दुष्टस्य पशुवैद्यस्य दुर्व्यवहाराः प्रकटिताः अभवन्। वञ्चनातः रक्षितवन्तं वर्धकं जनाः श्लाघितवन्तः।





# कूर्मावतारः

अरविन्दपुरे श्यामशास्त्री नाम कश्चन पण्डितः आसीत्। तस्य गृहस्य पृष्ठतः कश्चन प्राचीनः गभीरः कूपः आसीत्। तस्मिन् कूपे कश्चन कूर्मः आसीत्। किन्तु तत्र कूर्मः अस्ति इति कोऽपि न जानाति स्म। स च कूर्मः श्यामशास्त्रिणः पित्रा तत्र आनीय स्थापितः आसीत्।

कार्तिकमासे श्यामशास्त्रिणः गृहस्य पृष्ठतः स्थिते विशाले प्राङ्गणे पुराणकथाश्रवणं प्रचलति स्म। पुराणकथावक्ता श्यामशास्त्री एव। कथां श्रोतुं बहवः आगच्छन्ति स्म। ते कूपात् जलम् उद्धृत्य हस्तौ पादौ मुखं च प्रक्षाल्य श्रद्धया उपविश्य पुराणकथां शृण्वन्ति स्म।

एवम् आगताः परस्परं वदन्ति स्म– "कूपमण्डूकेन इव अस्माभिः जीवनं व्यर्थं न यापनीयम्। धर्मप्रवचनादिकं श्रोतव्यम्। सत्कथाश्रवणादिना कालः यापनीयः, तद्द्वारा जीवनं सार्थकं करणीयम्" इति।

कूपस्थः कूर्मः एतादृशानि वचनानि तदा तदा शृणोति स्म। तेषां श्रवणतः खेदम् अपि प्राप्नोति स्म सः। 'कूपे निवसन् अहम् अपि मण्डूकः इव। किं मादृशस्य जीवनेन? मया अपि कूपात् बहिः गन्तव्यम्। जीवनं सार्थकं करणीयं च' इति चिन्तयति स्म सः कूर्मः। 'कूपात् बहिः गन्तव्यम्' इति विचारः दिने दिने प्रवर्धमानः आसीत्।

कदाचित् तस्य कूर्मस्य इष्टं सिद्धम्। जलोद्धरणार्थं प्रेषितया द्रोण्या सह कूर्मः अपि उपरि आगतः। तत्समये श्यामशास्त्री काकतालीयन्यायेन दशावतारकथां श्रावयन् आसीत्। यदा सः कूर्मावतारस्य कथां श्रावयन् आसीत् तदा एव कूपात् कूर्मः बहिः आगतः आसीत्। एतत् दृष्ट्वा जनाः आश्चर्यचकिताः



सन्तुष्टाः च।

स च कूर्मः आकारेण स्थूलः आसीत्। तं पश्यन् उक्तवान् श्यामशास्त्री– "कूर्मावतारकथासपये साक्षात् भगवान् विष्णुः एव कूर्मरूपेण उपस्थितः अस्ति। अस्माकं जन्म धन्यं जातम्" इति। एतावत् उक्त्वा श्यामशास्त्री कूर्मं भक्त्या नमस्कृतवान्। तम् अनुसरन्तः अन्ये अपि कूर्मं भक्त्या नमस्कृतवन्तः।

एतत् सर्वं दृष्ट्वा सन्तुष्टः कूर्मः अचिन्तयत्– 'अहं भगवतः विष्णोः अंशेन जन्म प्राप्तवान् इत्यत्र नास्ति सन्देहः। यदि एवं न स्यात् तर्हि अभिज्ञाः अपि एते जनाः मां किमर्थं नमस्कुर्युः? अहं भाग्यशाली अस्मि' इति। एवं चिन्तयित्वा सः कूर्मः गर्वेण सर्वान् भक्तान् अपश्यत्।

कूर्मस्य अनुग्रहः जातः इति चिन्तयन्तः जनाः सन्तोषेण नृत्यं कृतवन्तः– "अहो, वयं धन्याः, वयं धन्याः!" इति।

श्यामशास्त्री कूर्मं पुष्पगन्धादिभिः अलङ्कृत्य पूजामन्दिरे उपवेशितवान्। ततः नीराजनं कृतम्। नारिकेलानि भञ्जयित्वा नैवेद्यरूपेण अर्पितानि। महत्या भक्त्या पूजा प्रवृत्ता अपि।

तस्मिन् दिने आदिनम् एषः कार्यक्रमः प्रवृत्तः। नीराजनसमये प्रसादवितरणसमये च भक्ताः दक्षिणारूपेण धनं समर्पितवन्तः। दक्षिणाधनं दृष्ट्वा श्यामशास्त्री नितरां सन्तुष्टः। एकदिनाभ्यन्तरे तेन प्रभूतं धनं सम्पादितम् आसीत्।

एतावता केचन भक्ताः समालोच्य निर्णीतवन्तः यत् कूर्मस्य निमित्तं मन्दिरं निर्मातव्यम् इति। एतदर्थं ते धनम् अपि सङ्गृहीतवन्तः। एवं सङ्गृहीतं धनं श्यामशास्त्रिणः हस्ते अर्पितवन्तः ते। श्यामशास्त्री तत् धनं तु विना वचनं स्वीकृतवान्। किन्तु मन्दिरनिर्माणं तु तस्मै न अरोचत। 'यदि कूर्ममन्दिरं निर्मीयेत तर्हि मम आयः स्थगितः भवेत्' इति तस्य चिन्तनम्। अतः सः पत्न्या सह समालोचनं कृत्वा एकम् उपायं चिन्तितवान्।

अनन्तरदिने श्यामशास्त्रिणः पत्न्याम्

आविष्टः कूर्मराजः अवदत्– ''मम प्रियभक्ताः! मम निमित्तं मन्दिरनिर्माणस्य प्रयत्नः मास्तु। मन्दिरनिर्माणेन मम प्राणहानिः स्यात्। मम वचनस्य अङ्गीकारेण भवतां हितं भवेत्'' इति।

भक्ताः एतानि वचनानि कूर्मस्य एव इति भावयन्तः मन्दिरनिर्माणविचारं परित्यक्तवन्तः। किन्तु एतत्सर्वं दृष्टवतः कूर्मस्य तु महान् कोपः आगतः।

श्यामशास्त्री कूर्मं नमस्कुर्वन् उक्तवान्– ''यदा भवान् कूपात् बहिः आगतः तदारभ्य भवतः मम च जीवनं सुखेन प्रचलत् अस्ति। भवान् एवम् एव मम गृहे धनस्य, सुवर्णस्य, रजतस्य च वृष्टिं करोति चेत् भवदर्थं सुवर्णाभरणानि कारयिष्यामि'' इति।

कूर्माय एषः प्रस्तावः न अरोचत। 'अहो, मानवाः परमस्वार्थिनः। स्वार्थसम्पादनार्थं ते निर्लज्जं सधैर्यं च अन्यान् वञ्चयन्ति। एतादृशानां सहवासः न हि श्रेयस्करः। अतः कूपे जीवनम् एव वरम्' इति अचिन्तयत् कूर्मः।

ततः अल्पे एव काले कूर्मकारणतः प्राप्तेन धनेन श्यामशास्त्री उत्तमं क्षेत्रं क्रीतवान्, समीचीनं गृहं निर्मितवान् च। एतत् दृष्ट्वा केचन असूयां प्राप्य कूर्मकारणतः यत् धनं प्राप्तं तस्य, ततः व्ययितस्य च विवरणं पृष्टवन्तः। तदा श्यामशास्त्री कूर्मं ग्रामात् बहिः स्थिते कासारे परित्यक्तवान्।

तदनन्तरदिने एव भगवान् कूर्मराजः श्यामशास्त्रिपत्न्याम् आविष्टः सन् अवदत्– ''अहं कूर्मराजः वदामि। मत्कारणतः केचन असूयां प्राप्तवन्तः सन्ति इति ज्ञातं मया। एतेन अहं नितरां खिन्नः अस्मि। इतः परं वा यदि भवन्तः असूयां परित्यज्य परस्परप्रीत्या जीवेयुः तर्हि अहं पुनः कदाचित् दृष्टिगोचरः भवेयम्। परस्परासूयां परित्यजन्तु भवन्तः'' इति।

एतत्कारणतः भक्ताः यथापूर्वं श्यामशास्त्रिणि आदरं प्रकटितवन्तः। श्यामशास्त्री सुखेन जीवनं यापितवान्।






# राजकुमार-मन्त्रिकुमारौ

पम्पावतीराज्यस्य राजा प्रमोदवर्मा। तस्य पुत्रः एकः एव अपत्यम् आसीत्। प्रमोदवर्मणः मन्त्रिणः सुनीतिचन्द्रस्य अपि एकः एव पुत्रः आसीत्। राजकुमारस्य मन्त्रिकुमारस्य च आत्मीयः सम्बन्धः आसीत्। सहोदरयोः यथा तथा तयोः परस्परप्रीतिः आसीत्।

आनन्दपुरस्य-युवराज्ञ्याः राजकुमारस्य च विवाहः निश्चितः। विवाहार्थं राजकुमारः सपरिवारम् आनन्दपुरं प्रति प्रस्थितवान्। मन्त्रिकुमारः तु तेन सह आसीत् एव। सायं ते इक्षुमतीतीरं प्राप्तवन्तः। तत्रैव वासः कृतः अपि। भोजनानन्तरं राजकुमारः पितामह्या उच्यमानां कथां शृण्वन् शय्यायां शयनं कृतवान्। कथासमाप्तितः पूर्वम् एव तेन निद्रा प्राप्ता। पितामही एतत् ज्ञात्वा कथाकथनं स्थगयित्वा ततः स्वस्थानं गतवती।

मन्त्रिकुमारेण इतोऽपि निद्रा न प्राप्ता आसीत्। तदा सः कञ्चन वार्तालापध्वनिं श्रुतवान्। आकाशे वार्तालापं कुर्वत्यः गच्छन्त्यः काश्चन देवकन्यकाः दृष्टाः तेन। सः तासां वार्तालापम् आसक्त्या श्रुतवान्।

एका देवकन्यका उक्तवती– ''एषः मूर्खः कथां पूर्णतः अश्रुत्वा एव निद्रां कृतवान्। अतः अहम् एतस्मै शापं ददामि। चन्द्रहारम् अधः पातयामि अहम्। प्रातः राजकुमारः यदा हारं स्प्रक्ष्यति तदा तस्य मरणं भविष्यति'' इति।

तदा अपरा देवकन्यका उक्तवती– ''यदि सः हारम् अस्पृशन् सजीवं तिष्ठेत् तर्हि नदीतीरे स्थितं फलैः पूर्णम् आम्रवृक्षं पश्येत् एव। तस्य वृक्षस्य फलं यदा सः स्प्रक्ष्यति तदा तस्य मरणं भविष्यति'' इति।

''यदि सः इतः अपि कथमपि आत्मानं रक्षेत् तर्हि यदा सः वधूप्रासादं प्रवेक्ष्यति तदा सिंहद्वारं तदुपरि पतिष्यति। तदा तु तस्य मरणं निश्चितम् एव'' इति उक्तवती तृतीया देवकन्यका।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

"सौभाग्यवशतः सः यदि एतेषु त्रिषु अपि सन्दर्भेषु अपायात् रक्षितः भवेत् तर्हि यदा सः शयनप्रकोष्ठं प्रविशति तदा शतवारं क्षौति। यदा यदा सः क्षौति तदा तदा कश्चित् 'दीर्घायुष्यं भवतु भवतः' इति आशीर्वादं यदि न करोति तर्हि एतस्य मरणं भविष्यति" इति उक्तवती चतुर्थी देवकन्यका।

"यदि कश्चित् एतेषु सन्दर्भेषु राजकुमारस्य रक्षणार्थं प्रयत्नं कुर्यात् तर्हि तेनैव प्राणापायः सम्मुखीक्रियते" इति उक्तवती पञ्चमी देवकन्यका।

ततः देवकन्यकाः निर्गताः। 'अहो महती विपत् आपतिता खलु! किं करणीयम् इदानीम्?' इति बहुधा चिन्तितवान् मन्त्रिकुमारः। अन्ते सः निश्चितवान् यत् राजकुमारस्य रक्षणार्थम् अपायस्य सम्मुखीकरणम् एव मम कर्तव्यम् इति।

प्रातः उत्थानसमनन्तरम् एव राजकुमारः चन्द्रहारं दृष्टवान्। यावत् सः तस्य हारस्य स्वीकरणार्थं हस्तं प्रसारयितुम् उद्युक्तः तावता तत्र स्थितः मन्त्रिकुमारः तस्य प्रयत्नं निवारयन् उक्तवान्— "मित्र! हारं मा स्पृशतु। मायाहारः स्यात् एषः। यदि तथा न स्यात् तर्हि कस्यचित् वा सैनिकस्य दृष्टिगोचरम् अभविष्यत् एव सः हारः" इति।

मन्त्रिकुमारस्य वचनम् अङ्गीकुर्वन् राजकुमारः हारस्वीकारविचारं परित्यक्तवान्। एवं प्रथमः अपायः निवृत्तः।



सर्वे ततः प्रस्थितवन्तः।

अनतिदूरे एव फलैः पूर्णः आम्रवृक्षः राजकुमारस्य दृष्टिगोचरः जातः। सः फलानि आहर्तुम् उद्युक्तः। तदा तस्य गमनं स्थगयन् उक्तवान् मन्त्रिकुमारः— "मित्र! एतानि फलानि यदि खादनयोग्यानि स्युः तर्हि कपयः पक्षिणः च कानिचन फलानि वा अखादिष्यन्। अत्र पश्यतु। एकः अपि पक्षी वानरः वा अत्र न दृश्यते। अतः फलप्राप्त्यर्थं प्रयत्नः मास्तु भवतः" इति।

राजकुमारः मन्त्रिकुमारस्य वचनम् अङ्गीकृतवान्। ततः सः सपरिवारम् आनन्दपुरं प्राप्तवान्। यदा सः राजभवनं प्रविश्य सिंहद्वारस्य समीपं गतवान् तदा

मन्त्रिकुमारः तस्य हस्त गृहीत्वा पृष्ठतः आकृष्टवान्। तावता सिंहद्वारम् अधः पतितम्। सर्वे 'अहो!' इति ध्वनिं कृतवन्तः। प्राणरक्षकं मन्त्रिकुमारं राजकुमारः प्रीत्या आलिङ्गितवान्।

राजकुमारस्य विवाहः समाप्तः। सपत्नीकस्य राजकुमारस्य प्रवेशात् पूर्वम् एव मन्त्रिकुमारः शयनप्रकोष्ठं प्रविश्य मञ्चस्य अधः उपविष्टवान् आसीत्। रात्रौ राजकुमारः पत्न्या सह प्रकोष्ठं प्रविष्टवान्। यदा सः तल्पस्य उपरि उपविष्टवान् तदा निरन्तरं क्षुवः तस्य मुखात् निर्गतः। यदा यदा सः क्षौति तदा तदा तल्पस्य अधः स्थितः मन्त्रिकुमारः 'दीर्घायुष्यं भवतु भवतः' इति आशीर्वादं करोति। राजकुमारेण शतवारं क्षुतम्। मन्त्रिकुमारः तावद्वारम् अपि दीर्घायुष्यम् आशंसितवान्।

राजकुमारस्य क्षुवः समाप्तः। तदा मन्त्रिकुमारः तल्पस्य अधोभागतः बहिः आगत्य मौनं प्रकोष्ठात् निर्गतवान्। शयनप्रकोष्ठे एवं निलीय स्थितवतः मन्त्रिकुमारस्य अनुचितव्यवहारेण राजकुमारः नितरां क्रुद्धः। सः तत्क्षणे एव भटान् आहूय आज्ञापितवान् यत् एतं दुष्टं मन्त्रिकुमारं बद्ध्वा कारागारे स्थापयन्तु, श्वः एतं शूलम् आरोपयन्तु च इति।

अनन्तरदिने शूलारोपणार्थं यदा सन्नाहः प्रचलति स्म तदा मन्त्रिकुमारः भटान् उक्तवान्– "मया राजकुमारः किञ्चित् निवेदनीयः अस्ति। अतः मां तत्समीपं नयन्तु" इति।

राजकुमारः एतां वार्तां ज्ञातवान्। सः मन्त्रिकुमारं स्वसमीपम् आनायितवान्। तदा मन्त्रिकुमारः देवकन्यकानां शापवार्ताम्, आत्मना कृतान् रक्षणप्रयत्नान् च विस्तरेण निवेदितवान्। अविचार्य कृतस्य स्वकार्यस्य निमित्तं लज्जां पश्चात्तापं च अनुभवन् मन्त्रिकुमारं बन्धविमुक्तं कृत्वा राजकुमारः क्षमां याचितवान्। आनन्दाश्रूणि स्रावयन्तौ तौ परस्परम् आलिङ्गितवन्तौ।



# प्रकृतिवैचित्र्याणि—

## विषपूर्णाः मण्डूकाः

दक्षिणामेरिकाप्रदेशस्य अरण्येषु विविधवर्णीयाः मण्डूकाः दृश्यन्ते। ते प्रायः विषपूर्णाः भवन्ति। रक्तवर्णीयाः पीतवर्णीयाः च मण्डूकाः अधिकतया दृश्यन्ते तत्र। एतेषां मण्डूकानां शरीरे कृष्णकालकाः कृष्णरेखाः च भवन्ति। वर्णकारणतः ते शत्रुभ्यः आत्मानं विना क्लेशं रक्षितुं शक्नुवन्ति। एतेषां चर्मणाम् अन्तर्भागे स्थितं विषं सङ्गृह्य अटविकाः स्वबाणाग्रेषु योजयित्वा प्राणिनः मारयन्ति। विषयुक्तानां बाणानां प्रहारं प्राप्य प्राणिनः अग्रे गन्तुम् अशक्नुवन्तः अधः पतन्ति।




## मीनानां श्वासोच्छ्वासक्रमः

तरणपटुभिः इव मीनैः तरणसमये श्वासस्वीकारार्थं जलात् उपरि आगन्तव्यं नास्ति। जलस्थं प्राणवायुं पृथक्कर्तुं समर्थः 'गिलस्'नामकः विशिष्टः श्वासकोषः तेषां भवति। मीनाः मुखात् जलं स्वीकृत्य श्वासकोषं प्रति प्रेषयन्ति। तत्र जलस्थः प्राणवायुः गृह्यते। अवशिष्टं जलं शिरसः पार्श्वे स्थितात् अङ्गात् बहिः प्रेष्यते। श्वासकोषे स्थिताः रक्तनालाः तं प्राणवायुं रक्तद्वारा शरीरस्य विविधान् भागान् प्रापयन्ति।




## अतिप्राचीनम्

चतुर्भ्यः वर्षेभ्यः पूर्वम् आष्ट्रेलियादेशो मेलबोर्न् इत्यत्र सकोशबीज-शिलावृत्तखण्डः (Fossil of angiosperm) प्राप्तः। अमेरिकादेशस्य 'येले'विश्वविद्यालयस्य बहवः विज्ञानिनः एतं सम्यक् परिशील्य एवम् अभिप्रायं प्रकटितवन्तः यत् एषः शिलावृत्तखण्डः १२ कोटिवर्षेभ्यः पूर्वतनः स्यात् इति। एतस्मिन् शिलावृत्तखण्डे एकं पुष्पं पर्णद्वयं च दृश्यते।



# NOW, GIVE YOUR SON a life-like MODEL of THE WORLD'S finest GUN



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जून्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



Anant Desai

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'फेब्रवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **क्षणं लब्ध्वा तु विश्रान्तिं कपोतोऽथ यियासति।**

द्वितीयचित्रम् - **जले दृष्ट्वा बको मीनं सहसा तं जिघृक्षति।**

प्रेषकः - श्री ए. श्रीनिवासन्, २४ अरिसिकरन्मार्गः, मैलापुरम्, मद्रास्-४




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# Ishq mera mazhab hai. Rasna Mera Drink Hai.



Yesterday at my school drama, I was like Amitabh Bachchan as in 'Khuda Gawah'. And everyone clapped and applauded. And when I came home you know what Mummy asked? 'So little Ustaad, what do you want to drink?' You know what I said? 'Ishq mera mazhab hai, Rasna Mera Drink Hai.' And then I drank up the whole jug of pyaara Rasna...









I Love You Rasna

More Taste — More Fun

Mudra : EAMR: 6641